# श्रीमद्भागवतपुराणः
# The Bhāgavata Purāṇa:

Version .1

collated and edited
by
Jan Brzezinski

February 15, 2001

# Chapter 1

01010011 जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
01010012 तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः
01010013 तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
01010014 धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि
01010021 धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
01010022 वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्
01010023 श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
01010024 सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्
01010031 निगमकल्पतरोर्गलितं फलं
01010032 शुकमुखादमृतद्रवसंयुतम्
01010033 पिबत भागवतं रसमालयं
01010034 मुहुरहो रसिका भुवि भावुकाः
01010041 नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः
01010042 सत्रं स्वर्गाय लोकाय सहस्रसममासत
01010051 त एकदा तु मुनयः प्रातर्हुतहुताग्नयः
01010052 सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात्
0101006 ऋषय ऊचुः
01010061 त्वया खलु पुराणानि सेतिहासानि चानघ
01010062 आख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत
01010071 यानि वेदविदां श्रेष्ठो भगवान् बादरायणः
01010072 अन्ये च मुनयः सूत परावरविदो विदुः
01010081 वेत्थ त्वं सौम्य तत् सर्वं तत्त्वतस्तदनुग्रहात्
01010082 ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत
01010091 तत्र तत्राञ्जसायुष्मन् भवता यद्विनिश्चितम्
01010092 पुंसाम् एकान्ततः श्रेयस्तन् नः शंसितुमर्हसि
01010101 प्रायेणाल्पायुषः सभ्य कलावस्मिन् युगे जनाः
01010102 मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः
01010111 भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः

01010112 अतः साधोऽत्र यत् सारं समुद्धृत्य मनीषया
01010113 ब्रूहि भद्राय भूतानां येनात्मा सुप्रसीदति
01010121 सूत जानासि भद्रं ते भगवान् सात्वतां पतिः
01010122 देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया
01010131 तन् नः शुश्रूषमाणानामर्हस्यङ्गानुवर्णितुम्
01010132 यस्यावतारो भूतानां क्षेमाय च भवाय च
01010141 आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्
01010142 ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम्
01010151 यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः
01010152 सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया
01010161 को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः
01010162 शुद्धिकामो न शृणुयाद्यशः कलिमलापहम्
01010171 तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः
01010172 ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः
01010181 अथाख्याहि हरेर्धीमन्न् अवतारकथाः शुभाः
01010182 ईला विदधतः स्वैरम् ईश्वरस्यात्ममायया
01010191 वयं तु न वितृप्याम उत्तमश्लोकविक्रमे
01010192 यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे
01010201 कृतवान् किल कर्माणि सह रामेण केशवः
01010202 अतिमर्त्यानि भगवान् गूढः कपटमानुषः
01010211 कलिमागतमाज्ञाय क्षेत्रेऽस्मिन् वैष्णवे वयम्
01010212 आसीना दीर्घसत्रेण कथायां सक्षणा हरेः
01010221 त्वं नः सन्दर्शितो धात्रा दुस्तरं निस्तितीर्षताम्
01010222 कलिं सत्त्वहरं पुंसां कर्णधार इवार्णवम्
01010231 ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्मवर्मणि
01010232 स्वां काष्ठामधुनोपेते धर्मः कं शरणं गतः

# Chapter 2

0102001 व्यास उवाच
01020011 इति सम्प्रश्नसंहृष्टो विप्राणां रौमहर्शणिः
01020012 प्रतिपूज्य वचस्तेशां प्रवक्तुम् उपचक्रमे
0102002 सूत उवाच
01020021 यं प्रव्रजन्तमनुपेतमपेतकृत्यं ।द्वैपायनो विरहकातर आजुहाव
01020022 पुत्रेति तन्मयतया तरवोऽभिनेदुस् ।तं सर्वभूतहृदयं मुनिमानतोऽस्मि
01020031 यः स्वानुभावमखिलश्रुतिसारमेकम् ।अध्यात्मदीपमतितितीर्षतां तमोऽन्धम्
01020032 संसारिणां करुणयाह पुराणगुह्यं ।तं व्याससूनुमुपयामि गुरुं मुनीनाम्
01020041 नारायणं नमस्कृत्य नरं चैव नरोत्तमम्
01020042 देवीं सरस्वतीं व्यासं ततो जयम् उदीरयेत्
01020051 मुनयः साधु पृष्टोऽहं भवद्भिर्लोकमङ्गलम्
01020052 यत् कृतः कृष्णसम्प्रश्नो येनात्मा सुप्रसीदति
01020062 स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे
01020062 अहैतुक्यप्रतिहता ययात्मा सुप्रसीदति
01020071 वासुदेवे भगवति भक्तियोगः प्रयोजितः
01020072 जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकम्
01020081 धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः
01020082 नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्
01020091 धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
01020092 नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः
01020101 कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
01020102 जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः
01020111 वदन्ति तत् तत्त्वविदस्तत्त्वं यज् ज्ञानमद्वयम्
01020112 ब्रह्मेति परमात्मेति भगवान् इति शब्द्यते
01020121 तच् छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया
01020122 पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया
010201o1 अतः पुम्भिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः
01020132 स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम्

01020141 तस्मादेकेन मनसा भगवान् सात्वतां पतिः
01020142 श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा
01020151 यदनुध्यासिना युक्ताः कर्मग्रन्थिनिबन्धनम्
01020152 छिन्दन्ति कोविदास्तस्य को न कुर्यात् कथारतिम्
01020161 शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः
01020162 स्यान् महत्सेवया विप्राः पुण्यतीर्थनिषेवणात्
01020171 शृण्वतां स्वकथाः कृष्णः पुण्यश्रवणकीर्तनः
01020172 हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम्
01020181 नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया
01020182 भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी
01020191 तदा रजस्तमोभावाः कामलोभादयश्च ये
01020192 चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति
01020201 एवं प्रसन्नमनसो भगवद्भक्तियोगतः
01020202 भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते
01020211 भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः
01020212 क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे
01020221 अतो वै कवयो नित्यं भक्तिं परमया मुदा
01020222 वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम्
01020231 सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर् । युक्तः परमपुरुष एक इहास्य धत्ते
01020232 स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः । श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः
01020241 पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ।
01020242 तमसस्तु रजस्तस्मात् सत्त्वं यद्ब्रह्मदर्शनम् ॥
01020251 भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम्
01020252 सत्त्वं विशुद्धं क्षेमाय कल्पन्ते येऽनु तान् इह
01020261 मुमुक्षवो घोररूपान् हित्वा भूतपतीन् अथ
01020262 नारायणकलाः शान्ता भजन्ति ह्यनसूयवः
01020271 रजस्तमःप्रकृतयः समशीला भजन्ति वै
01020272 पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः
01020281 वासुदेवपरा वेदा वासुदेवपरा मखाः
01020282 वासुदेवपरा योगा वासुदेवपराः क्रियाः
01020291 वासुदेवपरं ज्ञानं वासुदेवपरं तपः
01020292 वासुदेवपरो धर्मो वासुदेवपरा गतिः
01020301 स एवेदं ससर्जाग्रे भगवान् आत्ममायया
01020302 सदसद्रूपया चासौ गुणमयागुणो विभुः
01020311 तया विलसितेष्वेषु गुणेषु गुणवान् इव
01020312 अन्तःप्रविष्ट आभाति विज्ञानेन विजृम्भितः
01020321 यथा ह्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु
01020322 नानेव भाति विश्वात्मा भूतेषु च तथा पुमान्

01020331 असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियात्मभिः
01020332 स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान्
01020341 भावयत्येष सत्त्वेन लोकान् वै लोकभावनः
01020342 लीलावतारानुरतो देवतिर्यङ्नरादिषु

# Chapter 3

0103001 सूत उवाच
01030011 जगृहे पौरुषं रूपं भगवान् महदादिभिः
01030012 सम्भूतं षोडशकलमादौ लोकसिसृक्षया
01030021 यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः
01030022 नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः
01030031 यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः
01030032 तद्वै भगवतो रूपं विशुद्धं सत्त्वम् ऊर्जितम्
01030041 पश्यन्त्यदो रूपमदभ्रचक्षुषा । सहस्रपादोरुभुजाननाद्भुतम्
01030042 सहस्रमूर्धश्रवणाक्षिनासिकं । सहस्रमौल्यम्बरकुण्डलोल्लसत्
01030051 एतन् नानावताराणां निधानं बीजमव्ययम्
01030052 यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः
01030061 स एव प्रथमं देवः कौमारं सर्गमाश्रितः
01030062 चचार दुश्चरं ब्रह्मा ब्रह्मचर्यमखण्डितम्
01030071 द्वितीयं तु भवायास्य रसातलगतां महीम्
01030072 उद्धरिष्यन्न् उपादत्त यज्ञेशः सौकरं वपुः
01030081 तृतीयम् ऋषिसर्गं वै देवर्षित्वम् उपेत्य सः
01030082 तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः
01030091 तुर्ये धर्मकलासर्गे नरनारायणावृषी
01030092 भूत्वात्मोपशमोपेतमकरोद्दुश्चरं तपः
01030101 पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्
01030102 प्रोवाचासुरये साङ्ख्यं तत्त्वग्रामविनिर्णयम्
01030111 षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया
01030112 आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान्
01030121 ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत
01030122 स यामाद्यैः सुरगणैरपात् स्वायम्भुवान्तरम्
01030131 अष्टमे मेरुदेव्यां तु नाभेर्जात उरुक्रमः
01030132 दर्शयन् वर्त्म धीराणां सर्वाश्रमनमस्कृतम्
01030141 ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः

01030142 दुग्धेमाम् ओषधीर्विप्रास्तेनायं स उशत्तमः
01030151 रूपं स जगृहे मात्स्यं चाक्षुषोदधिसम्प्लवे
01030152 नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम्
01030161 सुरासुराणाम् उदधिं मथ्नतां मन्दराचलम्
01030162 दध्रे कमठरूपेण पृष्ठ एकादशे विभुः
01030171 धान्वन्तरं द्वादशमं त्रयोदशमम् एव च
01030172 अपाययत् सुरान् अन्यान् मोहिन्या मोहयन् स्त्रिया
01030181 चतुर्दशं नारसिंहं बिभ्रद्दैत्येन्द्रम् ऊर्जितम्
01030182 ददार करजैरूरावेरकां कटकृद्यथा
01030191 पञ्चदशं वामनकं कृत्वागादध्वरं बलेः
01030192 पदत्रयं याचमानः प्रत्यादित्सुस्त्रिपिष्टपम्
01030201 अवतारे षोडशमे पश्यन् ब्रह्मद्रुहो नृपान्
01030202 त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन् महीम्
01030211 ततः सप्तदशे जातः सत्यवत्यां पराशरात्
01030212 चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः
01030221 नरदेवत्वमापन्नः सुरकार्यचिकीर्षया
01030222 समुद्रनिग्रहादीनि चक्रे वीर्याण्यतः परम्
01030231 एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी
01030232 रामकृष्णाविति भुवो भगवान् अहरद्भरम्
01030241 ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम्
01030242 बुद्धो नाम्नाञ्जनसुतः कीकटेषु भविष्यति
01030251 अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु
01030252 जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः
01030261 अवतारा ह्यसङ्ख्येया हरेः सत्त्वनिधेर्द्विजाः
01030262 यथाविदासिनः कुल्याः सरसः स्युः सहस्रशः
01030271 ऋषयो मनवो देवा मनुपुत्रा महौजसः
01030272 कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः
01030281 एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्
01030282 इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे
01030291 जन्म गुह्यं भगवतो य एतत् प्रयतो नरः
01030292 सायं प्रातर्गृणन् भक्त्या दुःखग्रामाद्विमुच्यते
01030301 एतद्रूपं भगवतो ह्यरूपस्य चिदात्मनः
01030302 मायागुणैर्विरचितं महदादिभिरात्मनि
01030311 यथा नभसि मेघौघो रेणुर्वा पार्थिवोऽनिले
01030312 एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः
01030321 अतः परं यदव्यक्तमव्यूढगुणबृंहितम्
01030322 अदृष्टाश्रुतवस्तुत्वात् स जीवो यत् पुनर्भवः
01030331 यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा
01030332 अविद्ययात्मनि कृते इति तद्ब्रह्मदर्शनम्

01030341 यद्येषोपरता देवी माया वैशारदी मतिः
01030342 सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते
01030351 एवं च जन्मानि कर्माणि ह्यकर्तुरजनस्य च
01030352 वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः
01030361 स वा इदं विश्वममोघलीलः ।सृजत्यवत्यत्ति न सज्जतेऽस्मिन्
01030362 भूतेषु चान्तर्हित आत्मतन्त्रः ।षाड्वर्गिकं जिघ्रति षड्गुणेशः
01030371 न चास्य कश्चिन् निपुणेन धातुर् ।अवैति जन्तुः कुमनीष ऊतीः
01030372 नामानि रूपाणि मनोवचोभिः ।सन्तन्वतो नटचर्याम् इवाज्ञः
01030381 स वेद धातुः पदवीं परस्य ।दुरन्तवीर्यस्य रथाङ्गपाणेः
01030382 योऽमायया सन्ततयानुवृत्त्या ।भजेत तत्पादसरोजगन्धम्
01030391 अथेह धन्या भगवन्त इत्थं ।यद्वासुदेवेऽखिललोकनाथे
01030392 कुर्वन्ति सर्वात्मकमात्मभावं ।न यत्र भूयः परिवर्त उग्रः
01030401 इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्
01030402 उत्तमश्लोकचरितं चकार भगवान् ऋषिः
01030411 निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत्
01030412 तदिदं ग्राहयामाससुतमात्मवतां वरम्
01030421 सर्ववेदेतिहासानां सारं सारं समुद्धृतम्
01030422 स तु संश्रावयामासमहाराजं परीक्षितम्
01030431 प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः
01030432 कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह
01030441 कलौ नष्टदृशाम् एष पुराणार्कोऽधुनोदितः
01030442 तत्र कीर्तयतो विप्रा विप्रर्षेर्भूरितेजसः
01030451 अहं चाध्यगमं तत्र निविष्टस्तदनुग्रहात्
01030452 सोऽहं वः श्रावयिष्यामि यथाधीतं यथामति

# Chapter 4

0104001 व्यास उवाच
01040011 इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम्
01040012 वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत्
0104002 शौनक उवाच
01040021 सूत सूत महाभाग वद नो वदतां वर
01040022 कथां भागवतीं पुण्यां यदाह भगवा' छुकः
01040031 कस्मिन् युगे प्रवृत्तेयं स्थाने वा केन हेतुना
01040032 कुतः सञ्चोदितः कृष्णः कृतवान् संहितां मुनिः
01040041 तस्य पुत्रो महायोगी समदृङ् निर्विकल्पकः
01040042 एकान्तमतिरुन्निद्रो गूढो मूढ इवेयते
01040051 दृष्ट्वानुयान्तमृषिमात्मजमप्यनग्नं ।देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम्
01040052 तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवास्ति । स्त्रीपुम्भिदा न तु सुतस्य विविक्तदृष्टेः
01040061 कथमालक्षितः पौरैः सम्प्राप्तः कुरुजाङ्गलान्
01040062 उन्मत्तमूकजडवद्विचरन् गजसाह्वये
01040071 कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह
01040072 संवादः समभूत् तात यत्रैषा सात्वती श्रुतिः
01040081 स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम्
01040082 अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमम्
01040091 अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम्
01040092 तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः
01040101 स सम्राट् कस्य वा हेतोः पाण्डूनां मानवर्धनः
01040102 प्रायोपविष्टो गङ्गायामनादृत्याधिराट्श्रियम्
01040111 नमन्ति यत्पादनिकेतमात्मनः ।शिवाय हानीय धनानि शत्रवः
01040112 कथं स वीरः श्रियमङ्ग दुस्त्यजां ।युवैषतोत्स्रष्टुमहो सहासुभिः
01040121 शिवाय लोकस्य भवाय भूतये ।य उत्तमश्लोकपरायणा जनाः
01040122 जीवन्ति नात्मार्थमसौ पराश्रयं ।मुमोच निर्विद्य कुतः कलेवरम्
01040131 तत् सर्वं नः समाचक्ष्व पृष्टो यदिह किञ्चन

01040132 मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात्
0104014 सूत उवाच
01040141 द्वापरे समनुप्राप्ते तृतीये युगपर्यये
01040142 जातः पराशराद्योगी वासव्यां कलया हरेः
01040151 स कदाचित् सरस्वत्या उपस्पृश्य जलं शुचिः
01040152 विविक्त एक आसीन उदिते रविमण्डले
01040161 परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा
01040162 युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे
01040171 भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम्
01040172 अश्रद्दधानान् निःसत्त्वान् दुर्मेधान् ह्रसितायुषः
01040181 दुर्भगांश्च जनान् वीक्ष्य मुनिर्दिव्येन चक्षुषा
01040182 सर्ववर्णाश्रमाणां यद्दध्यौ हितममोघदृक्
01040191 चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम्
01040192 व्यदधाद्यज्ञसन्तत्यै वेदम् एकं चतुर्विधम्
01040201 ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार उद्धृताः
01040202 इतिहासपुराणं च पञ्चमो वेद उच्यते
01040211 तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः
01040212 वैशम्पायन एवैको निष्णातो यजुषाम् उत
01040221 अथर्वाङ्गिरसामासीत् सुमन्तुर्दारुणो मुनिः
01040222 इतिहासपुराणानां पिता मे रोमहर्षणः
01040231 त एत ऋषयो वेदं स्वं स्वं व्यस्यन्न् अनेकधा
01040232 शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन्
01040241 त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा
01040242 एवं चकार भगवान् व्यासः कृपणवत्सलः
01040251 स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा
01040252 कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह
01040253 इति भारतमाख्यानं कृपया मुनिना कृतम्
01040261 एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः
01040262 सर्वात्मकेनापि यदा नातुष्यद्धृदयं ततः
01040271 नातिप्रसीदद्धृदयः सरस्वत्यास्तटे शुचौ
01040272 वितर्कयन् विविक्तस्थ इदं चोवाच धर्मवित्
01040281 धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः
01040282 मानिता निर्व्यलीकेन गृहीतं चानुशासनम्
01040291 भारतव्यपदेशेन ह्याम्नायार्थश्च प्रदर्शितः
01040292 दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत
01040301 तथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः
01040302 असम्पन्न इवाभाति ब्रह्मवर्चस्य सत्तमः
01040311 किं वा भागवता धर्मा न प्रायेण निरूपिताः
01040312 प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः
01040321 तस्यैवं खिलमात्मानं मन्यमानस्य खिद्यतः

01040322 कृष्णस्य नारदोऽभ्यागादाश्रमं प्राग् उदाहृतम्
01040331 तमभिज्ञाय सहसा प्रत्युत्थायागतं मुनिः
01040332 पूजयामास विधिवन् नारदं सुरपूजितम्

# Chapter 5

0105001 सूत उवाच
01050011 अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः
01050012 देवर्षिः प्राह विप्रर्षिं वीणापाणिः स्मयन्न् इव
0105002 नारद उवाच
01050021 पाराशर्य महाभाग भवतः कच्चिदात्मना
01050022 परितुष्यति शारीर आत्मा मानस एव वा
01050031 जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम्
01050032 कृतवान् भारतं यस्त्वं सर्वार्थपरिबृंहितम्
01050041 जिज्ञासितमधीतं च ब्रह्म यत् तत् सनातनम्
01050042 तथापि शोचस्यात्मानमकृतार्थ इव प्रभो
0105005 व्यास उवाच
01050051 अस्त्येव मे सर्वम् इदं त्वयोक्तं ।तथापि नात्मा परितुष्यते मे
01050052 तन्मूलमव्यक्तमगाधबोधं ।पृच्छामहे त्वात्मभवात्मभूतम्
01050061 स वै भवान् वेद समस्तगुह्यम् ।उपासितो यत् पुरुषः पुराणः
01050062 परावरेशो मनसैव विश्वं ।सृजत्यवत्यत्ति गुणैरसङ्गः
01050071 त्वं पर्यटन्न् अर्क इव त्रिलोकीम् ।अन्तश्चरो वायुरिवात्मसाक्षी
01050072 परावरे ब्रह्मणि धर्मतो व्रतैः ।स्नातस्य मे न्यूनमलं विचक्ष्व
0105008 श्रीनारद उवाच
01050081 भवतानुदितप्रायं यशो भगवतोऽमलम्
01050082 येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम्
01050091 यथा धर्मादयश्चार्था मुनिवर्यानुकीर्तिताः
01050092 न तथा वासुदेवस्य महिमा ह्यनुवर्णितः
01050101 न यद्वचश्चित्रपदं हरेर्यशो ।जगत्पवित्रं प्रगृणीत कर्हिचित्
01050102 तद्वायसं तीर्थम् उशन्ति मानसा ।न यत्र हंसा निरमन्त्युशिक्क्षयाः
01050111 तद्वाग्विसर्गो जनताघविप्लवो ।यस्मिन् प्रतिश्लोकमबद्धवत्यपि
01050112 नामान्यनन्तस्य यशोऽङ्कितानि यत् ।शृण्वन्ति गायन्ति गृणन्ति साधवः
01050121 नैष्कर्म्यमप्यच्युतभाववर्जितं ।न शोभते ज्ञानमलं निरञ्जनम्
01050122 कुतः पुनः शश्वदभद्रम् ईश्वरे ।न चार्पितं कर्म यदप्यकारणम्

01050131 अथो महाभाग भवान् अमोघदृक् । शुचिश्रवाः सत्यरतो धृतव्रतः
01050132 उरुक्रमस्याखिलबन्धमुक्तये । समाधिनानुस्मर तद्विचेष्टितम्
01050141 ततोऽन्यथा किञ्चन यद्विवक्षतः । पृथग् दृशस्तत्कृतरूपनामभिः
01050142 न कर्हिचित् क्वापि च दुःस्थिता मतिर् । लभेत वाताहतनौरिवास्पदम्
01050151 जुगुप्सितं धर्मकृतेऽनुशासतः । स्वभावरक्तस्य महान् व्यतिक्रमः
01050152 यद्वाक्यतो धर्म इतीतरः स्थितो । न मन्यते तस्य निवारणं जनः
01050161 विचक्षणोऽस्यार्हति वेदितुं विभोर् । अनन्तपारस्य निवृत्तितः सुखम्
01050162 प्रवर्तमानस्य गुणैरनात्मनस् । ततो भवान् दर्शय चेष्टितं विभोः
01050171 त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर् । भजन्न् अपक्वोऽथ पतेत् ततो यदि
01050172 यत्र क्व वाभद्रमभूदमुष्य किं । को वार्थ आप्तोऽभजतां स्वधर्मतः
01050181 तस्यैव हेतोः प्रयतेत कोविदो । न लभ्यते यद्भ्रमताम् उपर्यधः
01050182 तल् लभ्यते दुःखवदन्यतः सुखं । कालेन सर्वत्र गभीररंहसा
01050191 न वै जनो जातु कथञ्चनाव्रजेन् । मुकुन्दसेव्यन्यवदङ्ग संसृतिम्
01050192 स्मरन् मुकुन्दाङ्घ्र्युपगूहनं पुनर् । विहातुम् इच्छेन् न रसग्रहो जनः
01050201 इदं हि विश्वं भगवान् इवेतरो । यतो जगत्स्थाननिरोधसम्भवाः
01050202 तद्धि स्वयं वेद भवांस्तथापि ते । प्रादेशमात्रं भवतः प्रदर्शितम्
01050211 त्वमात्मनात्मानमवेह्यमोघदृक् । परस्य पुंसः परमात्मनः कलाम्
01050212 अजं प्रजातं जगतः शिवाय तन् । महानुभावाभ्युदयोऽधिगण्यताम्
01050221 इदं हि पुंसस्तपसः श्रुतस्य वा । स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः
01050222 अविच्युतोऽर्थः कविभिर्निरूपितो । यदुत्तमश्लोकगुणानुवर्णनम्
01050231 अहं पुरातीतभवेऽभवं मुने । दास्यास्तु कस्याश्चन वेदवादिनाम्
01050232 निरूपितो बालक एव योगिनां । शुश्रूषणे प्रावृषि निर्विविक्षताम्
01050241 ते मय्यपेताखिलचापलेऽर्भके । दान्तेऽधृतक्रीडनकेऽनुवर्तिनि
01050242 चक्रुः कृपां यद्यपि तुल्यदर्शनाः । शुश्रूषमाणे मुनयोऽल्पभाषिणि
01050251 उच्छिष्टलेपान् अनुमोदितो द्विजैः । सकृत् स्म भुञ्जे तदपास्तकिल्बिषः
01050252 एवं प्रवृत्तस्य विशुद्धचेतसस् । तद्धर्म एवात्मरुचिः प्रजायते
01050261 तत्रान्वहं कृष्णकथाः प्रगायताम् । अनुग्रहेणाशृणवं मनोहराः
01050262 ताः श्रद्धया मेऽनुपदं विशृण्वतः । प्रियश्रवस्यङ्ग ममाभवद्रुचिः
01050271 तस्मिंस्तदा लब्धरुचेर्महामते । प्रियश्रवस्यस्खलिता मतिर्मम
01050272 ययाहम् एतत् सदसत् स्वमायया । पश्ये मयि ब्रह्मणि कल्पितं परे
01050281 इत्थं शरत्प्रावृषिकावृतू हरेर् । विशृण्वतो मेऽनुसवं यशोऽमलम्
01050282 सङ्कीर्त्यमानं मुनिभिर्महात्मभिर् । भक्तिः प्रवृत्तात्मरजस्तमोपहा
01050291 तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः
01050292 श्रद्दधानस्य बालस्य दान्तस्यानुचरस्य च
01050301 ज्ञानं गुह्यतमं यत् तत् साक्षाद्भगवतोदितम्
01050302 अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः
01050311 येनैवाहं भगवतो वासुदेवस्य वेधसः
01050312 मायानुभावमविदं येन गच्छन्ति तत्पदम्
01050321 एतत् संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम्

01050322 यदीश्वरे भगवति कर्म ब्रह्मणि भावितम्
01050331 आमयो यश्च भूतानां जायते येन सुव्रत
01050332 तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम्
01050341 एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः
01050342 त एवात्मविनाशाय कल्पन्ते कल्पिताः परे
01050351 यदत्र क्रियते कर्म भगवत्परितोषणम्
01050352 ज्ञानं यत् तदधीनं हि भक्तियोगसमन्वितम्
01050361 कुर्वाणा यत्र कर्माणी भगवच्छिक्षयासकृत्
01050362 गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च
01050371 ओं नमो भगवते तुभ्यं वासुदेवाय धीमहि
01050372 प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च
01050381 इति मूर्त्यभिधानेन मन्त्रमूर्तिममूर्तिकम्
01050382 यजते यज्ञपुरुषं स सम्यग् दर्शनः पुमान्
01050391 इमं स्वनिगमं ब्रह्मन्न् अवेत्य मदनुष्ठितम्
01050392 अदान् मे ज्ञानमैश्वर्यं स्वस्मिन् भावं च केशवः
01050401 त्वमप्यदभ्रश्रुत विश्रुतं विभोः । समाप्यते येन विदां बुभुत्सितम्
01050402 प्राख्याहि दुःखैर्मुहुरर्दितात्मनां । सङ्क्लेशनिर्वाणम् उशन्ति नान्यथा

# Chapter 6

0106001 सूत उवाच
01060011 एवं निशम्य भगवान् देवर्षेर्जन्म कर्म च
01060012 भूयः पप्रच्छ तं ब्रह्मन् व्यासः सत्यवतीसुतः
0106002 व्यास उवाच
01060021 भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिस्तव
01060022 वर्तमानो वयस्याद्ये ततः किमकरोद्भवान्
01060031 स्वायम्भुव कया वृत्त्या वर्तितं ते परं वयः
01060032 कथं चेदम् उदस्राक्षीः काले प्राप्ते कलेवरम्
01060041 प्राक्कल्पविषयाम् एतां स्मृतिं ते मुनिसत्तम
01060042 न ह्येष व्यवधात् काल एष सर्वनिराकृतिः
0106005 नारद उवाच
01060051 भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिर्मम
01060052 वर्तमानो वयस्याद्ये तत एतदकारषम्
01060061 एकात्मजा मे जननी योषिन् मूढा च किङ्करी
01060062 मय्यात्मजेऽनन्यगतौ चक्रे स्नेहानुबन्धनम्
01060071 सास्वतन्त्रा न कल्पासीद्योगक्षेमं ममेच्छती
01060072 ईशस्य हि वशे लोको योषा दारुमयी यथा
01060081 अहं च तद्ब्रह्मकुले ऊषिवांस्तदुपेक्षया
01060082 दिग्देशकालाव्युत्पन्नो बालकः पञ्चहायनः
01060091 एकदा निर्गतां गेहाद्दुहन्तीं निशि गां पथि
01060092 सर्पोऽदशत् पदा स्पृष्टः कृपणां कालचोदितः
01060101 तदा तदहम् ईशस्य भक्तानां शमभीप्सतः
01060102 अनुग्रहं मन्यमानः प्रातिष्ठं दिशम् उत्तराम्
01060111 स्फीता' जनपदांस्तत्र पुरग्रामव्रजाकरान्
01060112 खेटखर्वटवाटीश्च वनान्युपवनानि च
01060121 चित्रधातुविचित्राद्रीन् इभभग्नभुजद्रुमान्
01060122 जलाशया' छिवजलान् नलिनीः सुरसेविताः
01060131 चित्रस्वनैः पत्ररथैर्विभ्रमद्भ्रमरश्रियः

01060132 नलवेणुशरस्तन्ब कुशकीचकगह्वरम्
01060141 एक एवातियातोऽहमद्राक्षं विपिनं महत्
01060142 घोरं प्रतिभयाकारं व्यालोलूकशिवाजिरम्
01060151 परिश्रान्तेन्द्रियात्माहं तृट्परीतो बुभुक्षितः
01060152 स्नात्वा पीत्वा ह्रदे नद्या उपस्पृष्टो गतश्रमः
01060161 तस्मिन् निर्मनुजेऽरण्ये पिप्पलोपस्थ आश्रितः
01060162 आत्मनात्मानमात्मस्थं यथाश्रुतमचिन्तयम्
01060171 ध्यायतश्चरणाम्भोजं भावनिर्जितचेतसा
01060172 औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन् मे शनैर्हरिः
01060181 प्रेमातिभरनिर्भिन्न पुलकाङ्गोऽतिनिर्वृतः
01060182 आनन्दसम्प्लवे लीनो नापश्यम् उभयं मुने
01060191 रूपं भगवतो यत् तन् मनःकान्तं शुचापहम्
01060192 अपश्यन् सहसोत्तस्थे वैक्लव्याद्दुर्मना इव
01060201 दिदृक्षुस्तदहं भूयः प्रणिधाय मनो हृदि
01060202 वीक्षमाणोऽपि नापश्यमवितृप्त इवातुरः
01060211 एवं यतन्तं विजने मामाहागोचरो गिराम्
01060212 गम्भीरश्लक्ष्णया वाचा शुचः प्रशमयन्न् इव
01060221 हन्तास्मि' जन्मनि भवान् मा मां द्रष्टुम् इहार्हति
01060222 अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम्
01060231 सकृद्यद्दर्शितं रूपम् एतत् कामाय तेऽनघ
01060232 मत्कामः शनकैः साधु सर्वान् मुञ्चति हृच्छयान्
01060241 सत्सेवयादीर्घयापि जाता मयि दृढा मतिः
01060242 हित्वावद्यम् इमं लोकं गन्ता मज्जनतामसि
01060251 मतिर्मयि निबद्धेयं न विपद्येत कर्हिचित्
01060252 प्रजासर्गनिरोधेऽपि स्मृतिश्च मदनुग्रहात्
01060261 एतावदुक्त्वोपरराम तन् महद् ।भूतं नभोलिङ्गमलिङ्गम् ईश्वरम्
01060262 अहं च तस्मै महतां महीयसे ।शीर्ष्णावनामं विदधेऽनुकम्पितः
01060271 नामान्यनन्तस्य हतत्रपः पठन् ।गुह्यानि भद्राणि कृतानि च स्मरन्
01060272 गां पर्यटंस्तुष्टमना गतस्पृहः ।कालं प्रतीक्षन् विमदो विमत्सरः
01060281 एवं कृष्णमतेर्ब्रह्मन् नासक्तस्यामलात्मनः
01060282 कालः प्रादुरभूत् काले तडित् सौदामनी यथा
01060291 प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम्
01060292 आरब्धकर्मनिर्वाणो न्यपतत् पाञ्चभौतिकः
01060301 कल्पान्त इदमादाय शयानेऽम्भस्युदन्वतः
01060302 शिशयिषोरनुप्राणं विविशेऽन्तरहं विभोः
01060311 सहस्रयुगपर्यन्ते उत्थायेदं सिसृक्षतः
01060312 मरीचिमिश्रा ऋषयः प्राणेभ्योऽहं च जज्ञिरे
01060321 अन्तर्बहिश्च लोकांस्त्रीन् पर्येम्यस्कन्दितव्रतः
01060322 अनुग्रहान् महाविष्णोरविघातगतिः क्वचित्
01060331 देवदत्ताम् इमां वीणां स्वरब्रह्मविभूषिताम्

01060332 मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम्
01060341 प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः
01060342 आहूत इव मे शीघ्रं दर्शनं याति चेतसि
01060351 एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः
01060352 भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनम्
01060361 यमादिभिर्योगपथैः कामलोभहतो मुहुः
01060362 मुकुन्दसेवया यद्वत् तथात्माद्धा न शाम्यति
01060371 सर्वं तदिदमाख्यातं यत् पृष्टोऽहं त्वयानघ
01060372 जन्मकर्मरहस्यं मे भवतश्चात्मतोषणम्
0106038 सूत उवाच
01060381 एवं सम्भाष्य भगवान् नारदो वासवीसुतम्
01060382 आमन्त्र्य वीणां रणयन् ययौ यादृच्छिको मुनिः
01060391 अहो देवर्षिर्धन्योऽयं यत्कीर्तिं शार्ङ्गधन्वनः
01060392 गायन् माद्यन्न् इदं तन्त्र्या रमयत्यातुरं जगत्

# Chapter 7

0107001 शौनक उवाच
01070011 निर्गते नारदे सूत भगवान् बादरायणः
01070011 श्रुतवांस्तदभिप्रेतं ततः किमकरोद्विभुः
0107002 सूत उवाच
01070021 ब्रह्मनद्यां सरस्वत्यामाश्रमः पश्चिमे तटे
01070022 शम्याप्रास इति प्रोक्त ऋषीणां सत्रवर्धनः
01070031 तस्मिन् स्व आश्रमे व्यासो बदरीषण्डमण्डिते
01070032 आसीनोऽप उपस्पृश्य प्रणिदध्यौ मनः स्वयम्
01070041 भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले
01070042 अपश्यत् पुरुषं पूर्णं मायां च तदपाश्रयम्
01070051 यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम्
01070052 परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते
01070061 अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे
01070062 लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम्
01070071 यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे
01070072 भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा
01070081 स संहितां भागवतीं कृत्वानुक्रम्य चात्मजम्
01070082 शुकमध्यापयामास निवृत्तिनिरतं मुनिः
0107009 शौनक उवाच
01070091 स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः
01070092 कस्य वा बृहतीम् एतामात्मारामः समभ्यसत्
0107010 सूत उवाच
01070101 आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे
01070102 कुर्वन्त्यहैतुकीं भक्तिम् इत्थम्भूतगुणो हरिः
01070111 हरेर्गुणाक्षिप्तमतिर्भगवान् बादरायणिः
01070112 अध्यगान् महदाख्यानं नित्यं विष्णुजनप्रियः
01070121 परीक्षितोऽथ राजर्षेर्जन्मकर्मविलापनम्
01070122 संस्थां च पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयम्

01070131 यदा मृधे कौरवसृञ्जयानां । वीरेष्वथो वीरगतिं गतेषु
01070132 वृकोदराविद्धगदाभिमर्श । भग्नोरुदण्डे धृतराष्ट्रपुत्रे
01070141 भर्तुः प्रियं द्रौणिरिति स्म पश्यन् । कृष्णासुतानां स्वपतां शिरांसि
01070142 उपाहरद्विप्रियम् एव तस्य । जुगुप्सितं कर्म विगर्हयन्ति
01070151 माता शिशूनां निधनं सुतानां । निशम्य घोरं परितप्यमाना
01070152 तदारुदद्वाष्पकलाकुलाक्षी । तां सान्त्वयन्न् आह किरीटमाली
01070161 तदा शुचस्ते प्रमृजामि भद्रे । यद्ब्रह्मबन्धोः शिर आततायिनः
01070162 गाण्डीवमुक्तैर्विशिखैरुपाहरे । त्वाक्रम्य यत् स्नास्यसि दग्धपुत्रा
01070171 इति प्रियां वल्गुविचित्रजल्पैः । स सान्त्वयित्वाच्युतमित्रसूतः
01070172 अन्वाद्रवद्दंशित उग्रधन्वा । कपिध्वजो गुरुपुत्रं रथेन
01070181 तमापतन्तं स विलक्ष्य दूरात् । कुमारहोद्विग्नमना रथेन
01070182 पराद्रवत् प्राणपरीप्सुरुर्व्यां । यावद्गमं रुद्रभयाद्यथा कः
01070191 यदाशरणमात्मानमैक्षत श्रान्तवाजिनम्
01070192 अस्त्रं ब्रह्मशिरो मेने आत्मत्राणं द्विजात्मजः
01070201 अथोपस्पृश्य सलिलं सन्दधे तत् समाहितः
01070202 अजानन्न् अपि संहारं प्राणकृच्छ्र उपस्थिते
01070211 ततः प्रादुष्कृतं तेजः प्रचण्डं सर्वतो दिशम्
01070212 प्राणापदमभिप्रेक्ष्य विष्णुं जिष्णुरुवाच ह
0107022 अर्जुन उवाच
01070221 कृष्ण कृष्ण महाबाहो भक्तानामभयङ्कर
01070222 त्वम् एको दह्यमानानामपवर्गोऽसि संसृतेः
01070231 त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः
01070232 मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि
01070241 स एव जीवलोकस्य मायामोहितचेतसः
01070242 विधत्से स्वेन वीर्येण श्रेयो धर्मादिलक्षणम्
01070251 तथायं चावतारस्ते भुवो भारजिहीर्षया
01070252 स्वानां चानन्यभावानामनुध्यानाय चासकृत्
01070261 किम् इदं स्वित् कुतो वेति देवदेव न वेद्म्यहम्
01070262 सर्वतो मुखमायाति तेजः परमदारुणम्
0107027 श्रीभगवान् उवाच
01070271 वेत्थेदं द्रोणपुत्रस्य ब्राह्ममस्त्रं प्रदर्शितम्
01070272 नैवासौ वेद संहारं प्राणबाध उपस्थिते
01070281 न ह्यस्यान्यतमं किञ्चिदस्त्रं प्रत्यवकर्शनम्
01070282 जह्यस्त्रतेज उन्नद्धमस्त्रज्ञो ह्यस्त्रतेजसा
0107029 सूत उवाच
01070291 श्रुत्वा भगवता प्रोक्तं फाल्गुनः परवीरहा
01070292 स्पृष्ट्वापस्तं परिक्रम्य ब्राह्मं ब्राह्मास्त्रं सन्दधे
01070301 संहत्यान्योन्यम् उभयोस्तेजसी शरसंवृते
01070302 आवृत्य रोदसी खं च ववृधातेऽर्कवह्निवत्

01070311 दृष्ट्वास्त्रतेजस्तु तयोस्त्रील् लोकान् प्रदहन् महत्
01070312 दह्यमानाः प्रजाः सर्वाः सांवर्तकममंसत
01070321 प्रजोपद्रवमालक्ष्य लोकव्यतिकरं च तम्
01070322 मतं च वासुदेवस्य सञ्जहारार्जुनो द्वयम्
01070331 तत आसाद्य तरसा दारुणं गौतमीसुतम्
01070332 बबन्धामर्षताम्राक्षः पशुं रशनया यथा
01070341 शिबिराय निनीषन्तं रज्ज्वा बद्ध्वा रिपुं बलात्
01070342 प्राहार्जुनं प्रकुपितो भगवान् अम्बुजेक्षणः
01070351 मैनं पार्थार्हसि त्रातुं ब्रह्मबन्धुम् इमं जहि
01070352 योऽसावनागसः सुप्तान् अवधीन् निशि बालकान्
01070361 मत्तं प्रमत्तम् उन्मत्तं सुप्तं बालं स्त्रियं जडम्
01070362 प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवित्
01070371 स्वप्राणान् यः परप्राणैः प्रपुष्णात्यघृणः खलः
01070372 तद्वधस्तस्य हि श्रेयो यद्दोषाद्यात्यधः पुमान्
01070381 प्रतिश्रुतं च भवता पाञ्चाल्यै शृण्वतो मम
01070382 आहरिष्ये शिरस्तस्य यस्ते मानिनि पुत्रहा
01070391 तदसौ वध्यतां पाप आतताय्यात्मबन्धुहा
01070392 भर्तुश्च विप्रियं वीर कृतवान् कुलपांसनः
0107040 सूत उवाच
01070401 एवं परीक्षता धर्मं पार्थः कृष्णेन चोदितः
01070402 नैच्छद्धन्तुं गुरुसुतं यद्यप्यात्महनं महान्
01070411 अथोपेत्य स्वशिबिरं गोविन्दप्रियसारथिः
01070412 न्यवेदयत् तं प्रियायै शोचन्त्या आत्मजान् हतान्
01070421 तथाहृतं पशुवत् पाशबद्धम् ।अवाङ्मुखं कर्मजुगुप्सितेन
01070422 निरीक्ष्य कृष्णापकृतं गुरोः सुतं ।वामस्वभावा कृपया ननाम च
01070431 उवाच चासहन्त्यस्य बन्धनानयनं सती
01070432 मुच्यतां मुच्यताम् एष ब्राह्मणो नितरां गुरुः
01070441 सरहस्यो धनुर्वेदः सविसर्गोपसंयमः
01070442 अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात्
01070451 स एष भगवान् द्रोणः प्रजारूपेण वर्तते
01070452 तस्यात्मनोऽर्धं पत्न्यास्ते नान्वगाद्वीरसूः कृपी
01070461 तद्धर्मज्ञ महाभाग भवद्भिर्गौरवं कुलम्
01070462 वृजिनं नार्हति प्राप्तुं पूज्यं वन्द्यमभीक्ष्णशः
01070471 मा रोदीदस्य जननी गौतमी पतिदेवता
01070472 यथाहं मृतवत्सार्ता रोदिम्यश्रुमुखी मुहुः
01070481 यैः कोपितं ब्रह्मकुलं राजन्यैरजितात्मभिः
01070482 तत् कुलं प्रदहत्याशु सानुबन्धं शुचार्पितम्
0107049 सूत उवाच
01070491 धर्म्यं न्याय्यं सकरुणं निर्व्यलीकं समं महत्

01070492 राजा धर्मसुतो राज्ञ्याःप्रत्यनन्दद्वचो द्विजाः
01070501 नकुलः सहदेवश्च युयुधानो धनञ्जयः
01070502 भगवान् देवकीपुत्रो ये चान्ये याश्च योषितः
01070511 तत्राहामर्षितो भीमस्तस्य श्रेयान् वधः स्मृतः
01070512 न भर्तुर्नात्मनश्चार्थे योऽहन् सुप्तान् शिशून् वृथा
01070521 निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः
01070522 आलोक्य वदनं सख्युरिदमाह हसन्न् इव
0107053 श्रीभगवान् उवाच
01070531 ब्रह्मबन्धुर्न हन्तव्य आततायी वधार्हणः
01070532 मयैवोभयमाम्नातं परिपाह्यनुशासनम्
01070541 कुरु प्रतिश्रुतं सत्यं यत् तत् सान्त्वयता प्रियाम्
01070542 प्रियं च भीमसेनस्य पाञ्चाल्या मह्यम् एव च
0107055 सूत उवाच
01070551 अर्जुनः सहसाज्ञाय हरेर्हार्दमथासिना
01070552 मणिं जहार मूर्धन्यं द्विजस्य सहमूर्धजम्
01070561 विमुच्य रशनाबद्धं बालहत्याहतप्रभम्
01070562 तेजसा मणिना हीनं शिबिरान् निरयापयत्
01070571 वपनं द्रविणादानं स्थानान् निर्यापणं तथा
01070572 एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः
01070581 पुत्रशोकातुराः सर्वे पाण्डवाः सह कृष्णया
01070582 स्वानां मृतानां यत् कृत्यं चक्रुर्निर्हरणादिकम्

# Chapter 8

01080011 सूत उवाच
01080011 अथ ते सम्परेतानां स्वानाम् उदकम् इच्छताम्
010800112 दातुं सकृष्णा गङ्गायां पुरस्कृत्य ययुः स्त्रियः
01080021 ते निनीयोदकं सर्वे विलप्य च भृशं पुनः
01080022 आप्लुता हरिपादाब्जरजःपूतसरिज्जले
01080031 तत्रासीनं कुरुपतिं धृतराष्ट्रं सहानुजम्
01080032 गान्धारीं पुत्रशोकार्तां पृथां कृष्णां च माधवः
01080041 सान्त्वयामास मुनिभिर्हतबन्धू’ शुचार्पितान्
01080042 भूतेषु कालस्य गतिं दर्शयन् न प्रतिक्रियाम्
01080051 साधयित्वाजातशत्रोः स्वं राज्यं कितवैर्हृतम्
01080052 घातयित्वासतो राज्ञः कचस्पर्शक्षतायुषः
01080061 याजयित्वाश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः
01080062 तद्यशः पावनं दिक्षु शतमन्योरिवातनोत्
01080071 आमन्त्र्य पाण्डुपुत्रांश्च शैनेयोद्धवसंयुतः
01080072 द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः
01080081 गन्तुं कृतमतिर्ब्रह्मन् द्वारकां रथमास्थितः
01080082 उपलेभेऽभिधावन्तीम् उत्तरां भयविह्वलाम्
0108009 उत्तरोवाच
01080091 पाहि पाहि महायोगिन् देवदेव जगत्पते
01080092 नान्यं त्वदभयं पश्ये यत्र मृत्युः परस्परम्
01080101 अभिद्रवति माम् ईश शरस्तप्तायसो विभो
01080102 कामं दहतु मां नाथ मा मे गर्भो निपात्यताम्
0108011 सूत उवाच
01080111 उपधार्य वचस्तस्या भगवान् भक्तवत्सलः
01080112 अपाण्डवम् इदं कर्तुं द्रौणेरस्त्रमबुध्यत
01080121 तर्ह्येवाथ मुनिश्रेष्ठ पाण्डवाः पञ्च सायकान्
01080122 आत्मनोऽभिमुखान् दीप्तान् आलक्ष्यास्त्राण्युपाददुः
01080131 व्यसनं वीक्ष्य तत् तेषामनन्यविषयात्मनाम्

01080132 सुदर्शनेन स्वास्त्रेण स्वानां रक्षां व्यधाद्विभुः
01080141 अन्तःस्थः सर्वभूतानामात्मा योगेश्वरो हरिः
01080142 स्वमाययावृणोद्गर्भं वैराट्याः कुरुतन्तवे
01080151 यद्यप्यस्त्रं ब्रह्मशिरस्त्वमोघं चाप्रतिक्रियम्
01080152 वैष्णवं तेज आसाद्य समशाम्यद्भृगूद्वह
01080161 मा मंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमये ञ्चुते
01080162 य इदं मायया देव्या सृजत्यवति हन्त्यजः
01080171 ब्रह्मतेजोविनिर्मुक्तैरात्मजैः सह कृष्णया
01080172 प्रयाणाभिमुखं कृष्णम् इदमाह पृथा सती
0108018 कुन्त्युवाच
01080181 नमस्ये पुरुषं त्वाद्यम् ईश्वरं प्रकृतेः परम्
01080182 अलक्ष्यं सर्वभूतानामन्तर्बहिरवस्थितम्
01080191 मायाजवनिकाच्छन्नमज्ञाधोक्षजमव्ययम्
01080192 न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा
01080201 तथा परमहंसानां मुनीनाममलात्मनाम्
01080202 भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः
01080211 कृष्णाय वासुदेवाय देवकीनन्दनाय च
01080212 नन्दगोपकुमाराय गोविन्दाय नमो नमः
01080221 नमः पङ्कजनाभाय नमः पङ्कजमालिने
01080222 नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये
01080231 यथा हृषीकेश खलेन देवकी ।कंसेन रुद्धातिचिरं शुचार्पिता
01080232 विमोचिताहं च सहात्मजा विभो ।त्वयैव नाथेन मुहुर्विपद्गणात्
01080241 विषान् महाग्नेः पुरुषाददर्शनाद् ।असत्सभाया वनवासकृच्छ्रतः
01080242 मृधे मृधेऽनेकमहारथास्त्रतो ।द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः
01080251 विपदः सन्तु ताः शश्वत् तत्र तत्र जगद्गुरो
01080252 भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम्
01080261 जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान्
01080262 नैवार्हत्यभिधातुं वै त्वामकिञ्चनगोचरम्
01080271 नमोऽकिञ्चनवित्ताय निवृत्तगुणवृत्तये
01080272 आत्मारामाय शान्ताय कैवल्यपतये नमः
01080281 मन्ये त्वां कालम् ईशानमनादिनिधनं विभुम्
01080282 समं चरन्तं सर्वत्र भूतानां यन् मिथः कलिः
01080291 न वेद कश्चिद्भगवंश्चिकीर्षितं ।तवेहमानस्य नृणां विडम्बनम्
01080292 न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद् ।द्वेष्यश्च यस्मिन् विषमा मतिर्नृणाम्
01080301 जन्म कर्म च विश्वात्मन्न् अजस्याकर्तुरात्मनः
01080302 तिर्यङ्न्-षिषु यादःसु तदत्यन्तविडम्बनम्
01080311 गोप्याददे त्वयि कृतागसि दाम तावद् ।या ते दशाश्रुकलिलाञ्जनसम्भ्रमाक्षम्
01080312 वक्त्रं निनीय भयभावनया स्थितस्य ।सा मां विमोहयति भीरपि यद्बिभेति
01080321 केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये

01080322 यदोः प्रियस्यान्ववाये मलयस्येव चन्दनम्
01080331 अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात्
01080332 अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम्
01080341 भारावतारणायान्ये भुवो नाव इवोदधौ
01080342 सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः
01080351 भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः
01080352 श्रवणस्मरणार्हाणि करिष्यन्न् इति केचन
01080361 शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः ।स्मरन्ति नन्दन्ति तवेहितं जनाः
01080362 त एव पश्यन्त्यचिरेण तावकं ।भवप्रवाहोपरमं पदाम्बुजम्
01080371 अप्यद्य नस्त्वं स्वकृतेहित प्रभो ।जिहाससि स्वित् सुहृदोऽनुजीविनः
01080372 येषां न चान्यद्भवतः पदाम्बुजात् ।परायणं राजसु योजितांहसाम्
01080381 के वयं नामरूपाभ्यां यदुभिः सह पाण्डवाः
01080382 भवतोऽदर्शनं यर्हि हृषीकाणाम् इवेशितुः
01080391 नेयं शोभिष्यते तत्र यथेदानीं गदाधर
01080392 त्वत्पदैरङ्किता भाति स्वलक्षणविलक्षितैः
01080401 इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः
01080402 वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षितैः
01080411 अथ विश्वेश विश्वात्मन् विश्वमूर्ते स्वकेषु मे
01080412 स्नेहपाशम् इमं छिन्धि दृढं पाण्डुषु वृष्णिषु
01080421 त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत्
01080422 रतिम् उद्वहतादद्धा गङ्गेवौघम् उदन्वति
01080431 श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग् ।राजन्यवंशदहनानपवर्गवीर्य
01080432 गोविन्द गोद्विजसुरार्तिहरावतार ।योगेश्वराखिलगुरो भगवन् नमस्ते
0108044 सूत उवाच
01080441 पृथयेत्थं कलपदैः परिणूताखिलोदयः
01080442 मन्दं जहास वैकुण्ठो मोहयन्न् इव मायया
01080451 तां बाढम् इत्युपामन्त्र्य प्रविश्य गजसाह्वयम्
01080452 स्त्रियश्च स्वपुरं यास्यन् प्रेम्णा राज्ञा निवारितः
01080461 व्यासाद्यैरीश्वरेहाज्ञैः कृष्णेनाद्भुतकर्मणा
01080462 प्रबोधितोऽपीतिहासैर्नाबुध्यत शुचार्पितः
01080471 आह राजा धर्मसुतश्चिन्तयन् सुहृदां वधम्
01080472 प्राकृतेनात्मना विप्राः स्नेहमोहवशं गतः
01080481 अहो मे पश्यताज्ञानं हृदि रूढं दुरात्मनः
01080482 पारक्यस्यैव देहस्य बह्व्यो मेऽक्षौहिणीर्हताः
01080491 बालद्विजसुहृन्मित्र पितृभ्रातृगुरुद्रुहः
01080492 न मे स्यान् निरयान् मोक्षो ह्यपि वर्षायुतायुतैः
01080501 नैनो राज्ञः प्रजाभर्तुर्धर्मयुद्धे वधो द्विषाम्
01080502 इति मे न तु बोधाय कल्पते शासनं वचः
01080511 स्त्रीणां मद्धतबन्धूनां द्रोहो योऽसाविहोत्थितः

01080512 कर्मभिर्गृहमेधीयैर्नाहं कल्पो व्यपोहितुम्
01080521 यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम्
01080522 भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति

# Chapter 9

0109001 सूत उवाच
01090011 इति भीतः प्रजाद्रोहात् सर्वधर्मविवित्सया
01090012 ततो विनशनं प्रागाद्यत्र देवव्रतोऽपतत्
01090021 तदा ते भ्रातरः सर्वे सदश्वैः स्वर्णभूषितैः
01090022 अन्वगच्छन् रथैर्विप्रा व्यासधौम्यादयस्तथा
01090031 भगवान् अपि विप्रर्षे रथेन सधनञ्जयः
01090032 स तैर्व्यरोचत नृपः कुवेर इव गुह्यकैः
01090041 दृष्ट्वा निपतितं भूमौ दिवश्च्युतम् इवामरम्
01090042 प्रणेमुः पाण्डवा भीष्मं सानुगाः सह चक्रिणा
01090051 तत्र ब्रह्मर्षयः सर्वे देवर्षयश्च सत्तम
01090052 राजर्षयश्च तत्रासन् द्रष्टुं भरतपुङ्गवम्
01090061 पर्वतो नारदो धौम्यो भगवान् बादरायणः
01090062 बृहदश्वो भरद्वाजः सशिष्यो रेणुकासुतः
01090071 वसिष्ठ इन्द्रप्रमदस्त्रितो गृत्समदोऽसितः
01090072 कक्षीवान् गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः
01090081 अन्ये च मुनयो ब्रह्मन् ब्रह्मरातादयोऽमलाः
01090082 शिष्यैरुपेता आजग्मुः कश्यपाङ्गिरसादयः
01090091 तान् समेतान् महाभागान् उपलभ्य वसूत्तमः
01090092 पूजयामास धर्मज्ञो देशकालविभागवित्
01090101 कृष्णं च तत्प्रभावज्ञ आसीनं जगदीश्वरम्
01090102 हृदिस्थं पूजयामास माययोपात्तविग्रहम्
01090111 पाण्डुपुत्रान् उपासीनान् प्रश्रयप्रेमसङ्गतान्
01090112 अभ्याचष्टानुरागाश्रैरन्धीभूतेन चक्षुषा
01090121 अहो कष्टमहोऽन्याय्यं यद्यूयं धर्मनन्दनाः
01090122 जीवितुं नार्हथ क्लिष्टं विप्रधर्माच्युताश्रयाः
01090131 संस्थितेऽतिरथे पाण्डौ पृथा बालप्रजा वधूः
01090132 युष्मत्कृते बहून् क्लेशान् प्राप्ता तोकवती मुहुः
01090141 सर्वं कालकृतं मन्ये भवतां च यदप्रियम्

01090142 सपालो यद्वशे लोको वायोरिव घनावलिः
01090151 यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः
01090152 कृष्णोऽस्त्री गाण्डिवं चापं सुहृत् कृष्णस्ततो विपत्
01090161 न ह्यस्य कर्हिचिद्राजन् पुमान् वेद विधित्सितम्
01090162 यद्विजिज्ञासया युक्ता मुह्यन्ति कवयोऽपि हि
01090171 तस्मादिदं दैवतन्त्रं व्यवस्य भरतर्षभ
01090172 तस्यानुविहितोऽनाथा नाथ पाहि प्रजाः प्रभो
01090181 एष वै भगवान् साक्षादाद्यो नारायणः पुमान्
01090182 मोहयन् मायया लोकं गूढश्चरति वृष्णिषु
01090191 अस्यानुभावं भगवान् वेद गुह्यतमं शिवः
01090192 देवर्षिर्नारदः साक्षाद्भगवान् कपिलो नृप
01090201 यं मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम्
01090202 अकरोः सचिवं दूतं सौहृदादथ सारथिम्
01090211 सर्वात्मनः समदृशो ह्यद्वयस्यानहङ्कृतेः
01090212 तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित्
01090221 तथाप्येकान्तभक्तेषु पश्य भूपानुकम्पितम्
01090222 यन् मेऽसूंस्त्यजतः साक्षात् कृष्णो दर्शनमागतः
01090231 भक्त्यावेश्य मनो यस्मिन् वाचा यन्नाम कीर्तयन्
01090232 त्यजन् कलेवरं योगी मुच्यते कामकर्मभिः
01090241 स देवदेवो भगवान् प्रतीक्षतां ।कलेवरं यावदिदं हिनोम्यहम्
01090242 प्रसन्नहासारुणलोचनोल्लसन् ।मुखाम्बुजो ध्यानपथश्चतुर्भुजः
0109025 सूत उवाच
01090251 युधिष्ठिरस्तदाकर्ण्य शयानं शरपञ्जरे
01090252 अपृच्छद्विविधान् धर्मान् ऋषीणां चानुशृण्वताम्
01090261 पुरुषस्वभावविहितान् यथावर्णं यथाश्रमम्
01090262 वैराग्यरागोपाधिभ्यामाम्नातोभयलक्षणान्
01090271 दानधर्मान् राजधर्मान् मोक्षधर्मान् विभागशः
01090272 स्त्रीधर्मान् भगवद्धर्मान् समासव्यासयोगतः
01090281 धर्मार्थकाममोक्षांश्च सहोपायान् यथा मुने
01090282 नानाख्यानेतिहासेषु वर्णयामास तत्त्ववित्
01090291 धर्मं प्रवदतस्तस्य स कालः प्रत्युपस्थितः
01090292 यो योगिनश्छन्दमृत्योर्वाञ्छितस्तूत्तरायणः
01090301 तदोपसंहृत्य गिरः सहस्रणीर् ।विमुक्तसङ्गं मन आदिपूरुषे
01090302 कृष्णे लसत्पीतपटे चतुर्भुजे ।पुरः स्थितेऽमीलितदृग् व्यधारयत्
01090311 विशुद्धया धारणया हताशुभस् ।तदीक्षयैवाशु गतायुधश्रमः
01090312 निवृत्तसर्वेन्द्रियवृत्तिविभ्रमस् ।तुष्टाव जन्यं विसृज’ जनार्दनम्
0109032 श्रीभीष्म उवाच
01090321 इति मतिरुपकल्पिता वितृष्णा ।भगवति सात्वतपुङ्गवे विभूम्नि
01090322 स्वसुखम् उपगते क्वचिद्विहर्तुं ।प्रकृतिम् उपेयुषि यद्भवप्रवाहः

01090331 त्रिभुवनकमनं तमालवर्णं । रविकरगौरवराम्बरं दधाने
01090332 वपुरलककुलावृताननाब्जं । विजयसखे रतिरस्तु मेऽनवद्या
01090341 युधि तुरगरजोविधूम्रविष्वक् । कचलुलितश्रमवार्यलङ्कृतास्ये
01090342 मम निशितशरैर्विभिद्यमान । त्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा
01090351 सपदि सखिवचो निशम्य मध्ये । निजपरयोर्बलयो रथं निवेश्य
01090352 स्थितवति परसैनिकायुरक्ष्णा । हृतवति पार्थसखे रतिर्ममास्तु
01090361 व्यवहितपृतनामुखं निरीक्ष्य । स्वजनवधाद्विमुखस्य दोषबुद्ध्या
01090362 कुमतिमहरदात्मविद्यया यश् । चरणरतिः परमस्य तस्य मेऽस्तु
01090371 स्वनिगममपहाय मत्प्रतिज्ञाम् । ऋतमधिकर्तुमवप्लुतो रथस्थः
01090372 धृतरथचरणोऽभ्ययाच् चलद्गुर् । हरिरिव हन्तुम् इभं गतोत्तरीयः
01090381 शितविशिखहतो विशीर्णदंशः । क्षतजपरिप्लुत आततायिनो मे
01090382 प्रसभमभिससार मद्वधार्थं । स भवतु मे भगवान् गतिर्मुकुन्दः
01090391 विजयरथकुटुम्ब आत्ततोत्रे । धृतहयरश्मिनि तच्छ्रियेक्षणीये
01090392 भगवति रतिरस्तु मे मुमूर्षोर् । यम् इह निरीक्ष्य हता गताः स्वरूपम्
01090401 ललितगतिविलासवल्गुहास । प्रणयनिरीक्षणकल्पितोरुमानाः
01090402 कृतमनुकृतवत्य उन्मदान्धाः । प्रकृतिमगन् किल यस्य गोपवध्वः
01090411 मुनिगणनृपवर्यसङ्कुलेऽन्तः । सदसि युधिष्ठिरराजसूय एषाम्
01090412 अर्हणम् उपपेद ईक्षणीयो । मम दृशिगोचर एष आविरात्मा
01090421 तम् इममहमजं शरीरभाजां । हृदि हृदि धिष्ठितमात्मकल्पितानाम्
01090422 प्रतिदृशम् इव नैकधार्कम् एकं । समधिगतोऽस्मि विधूतभेदमोहः
0109043 सूत उवाच
01090431 कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिः
01090432 आत्मन्यात्मानमावेश्य सोऽन्तःश्वास उपारमत्
01090441 सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले
01090442 सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये
01090451 तत्र दुन्दुभयो नेदुर्देवमानववादिताः
01090452 शशंसुः साधवो राज्ञां खात् पेतुः पुष्पवृष्टयः
01090461 तस्य निर्हरणादीनि सम्परेतस्य भार्गव
01090462 युधिष्ठिरः कारयित्वा मुहूर्तं दुःखितोऽभवत्
01090471 तुष्टुवुर्मुनयो हृष्टाः कृष्णं तद्गुह्यनामभिः
01090472 ततस्ते कृष्णहृदयाः स्वाश्रमान् प्रययुः पुनः
01090481 ततो युधिष्ठिरो गत्वा सहकृष्णो गजाह्वयम्
01090482 पितरं सान्त्वयामास गान्धारीं च तपस्विनीम्
01090491 पित्रा चानुमतो राजा वासुदेवानुमोदितः
01090492 चकार राज्यं धर्मेण पितृपैतामहं विभुः

# Chapter 10

0110001 शौनक उवाच
01100011 हत्वा स्वरिक्थस्पृध आततायिनो । युधिष्ठिरो धर्मभृतां वरिष्ठः
01100012 सहानुजैः प्रत्यवरुद्धभोजनः । कथं प्रवृत्तः किमकारषीत् ततः
0110002 सूत उवाच
01100021 वंशं कुरोर्वंशदवाग्निनिर्हृतं । संरोहयित्वा भवभावनो हरिः
01100022 निवेशयित्वा निजराज्य ईश्वरो । युधिष्ठिरं प्रीतमना बभूव हनिशम्य
01100031 निशम्य भीष्मोक्तमथाच्युतोक्तं । प्रवृत्तविज्ञानविधूतविभ्रमः
01100032 शशास गाम् इन्द्र इवाजिताश्रयः । परिध्युपान्तामनुजानुवर्तितः
01100041 कामं ववर्ष पर्जन्यः सर्वकामदुघा मही
01100042 सिषिचुः स्म व्रजान् गावः पयसोधस्वतीर्मुदा
01100051 नद्यः समुद्रा गिरयः सवनस्पतिवीरुधः
01100052 फलन्त्योषधयः सर्वाः काममन्वृतु तस्य वै
01100061 नाधयो व्याधयः क्लेशा दैवभूतात्महेतवः
01100062 अजातशत्रावभवन् जन्तूनां राज्ञि कर्हिचित्
01100071 उषित्वा हास्तिनपुरे मासान् कतिपयान् हरिः
01100072 सुहृदां च विशोकाय स्वसुश्च प्रियकाम्यया
01100081 आमन्त्र्य चाभ्यनुज्ञातः परिष्वज्याभिवाद्य तम्
01100082 आरुरोह रथं कैश्चित् परिष्वक्तोऽभिवादितः
01100091 सुभद्रा द्रौपदी कुन्ती विराटतनया तथा
01100092 गान्धारी धृतराष्ट्रश्च युयुत्सुर्गौतमो यमौ
01100101 वृकोदरश्च धौम्यश्च स्त्रियो मत्स्यसुतादयः
01100102 न सेहिरे विमुह्यन्तो विरहं शार्ङ्गधन्वनः
01100111 सत्सङ्गान् मुक्तदुःसङ्गो हातुं नोत्सहते बुधः
01100112 कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम्
01100121 तस्मिन् न्यस्तधियः पार्थाः सहेरन् विरहं कथम्
01100122 दर्शनस्पर्शसंलाप शयनासनभोजनैः
01100131 सर्वे तेऽनिमिषैरक्षैस्तमनु द्रुतचेतसः
01100132 वीक्षन्तः स्नेहसम्बद्धा विचेलुस्तत्र तत्र ह

01100141 न्यरुन्धन्न् उद्गलद्बाष्पमौत्कण्ठ्याद्देवकीसुते
01100142 निर्यात्यगारान् नोऽभद्रम् इति स्याद्बान्धवस्त्रियः
01100151 मृदङ्गशङ्खभेर्यश्च वीणापणवगोमुखाः
01100152 धुन्धुर्यानकघण्टाद्या नेदुर्दुन्दुभयस्तथा
01100161 प्रासादशिखरारूढाः कुरुनार्यो दिदृक्षया
01100162 ववृषुः कुसुमैः कृष्णं प्रेमव्रीडास्मितेक्षणाः
01100171 सितातपत्रं जग्राह मुक्तादामविभूषितम्
01100172 रत्नदण्डं गुडाकेशः प्रियः प्रियतमस्य ह
01100181 उद्धवः सात्यकिश्चैव व्यजने परमाद्भुते
01100182 विकीर्यमाणः कुसुमै रेजे मधुपतिः पथि
01100191 अश्रूयन्ताशिषः सत्यास्तत्र तत्र द्विजेरिताः
01100192 नानुरूपानुरूपाश्च निर्गुणस्य गुणात्मनः
01100201 अन्योन्यमासीत् सञ्जल्प उत्तमश्लोकचेतसाम्
01100202 कौरवेन्द्रपुरस्त्रीणां सर्वश्रुतिमनोहरः
01100211 स वै किलायं पुरुषः पुरातनो । य एक आसीदविशेष आत्मनि
01100212 अग्रे गुणेभ्यो जगदात्मनीश्वरे । निमीलितात्मन् निशि सुप्तशक्तिषु
01100221 स एव भूयो निजवीर्यचोदितां । स्वजीवमायां प्रकृतिं सिसृक्षतीम्
01100222 अनामरूपात्मनि रूपनामनी । विधित्समानोऽनुससार शास्त्रकृत्
01100231 स वा अयं यत् पदमत्र सूरयो । जितेन्द्रिया निर्जितमातरिश्वनः
01100232 पश्यन्ति भक्त्युत्कलितामलात्मना । नन्वेष सत्त्वं परिमार्ष्टुमर्हति
01100241 स वा अयं सख्यनुगीतसत्कथो । वेदेषु गुह्येषु च गुह्यवादिभिः
01100242 य एक ईशो जगदात्मलीलया । सृजत्यवत्यत्ति न तत्र सज्जते
01100251 यदा ह्यधर्मेण तमोधियो नृपा । जीवन्ति तत्रैष हि सत्त्वतः किल
01100252 धत्ते भगं सत्यम् ऋतं दयां यशो । भवाय रूपाणि दधद्युगे युगे
01100261 अहो अलं श्लाघ्यतमं यदोः कुलम् । अहो अलं पुण्यतमं मधोर्वनम्
01100262 यदेष पुंसाम् ऋषभः श्रियः पतिः । स्वजन्मना चङ्क्रमणेन चाञ्चति
01100271 अहो बत स्वर्यशसस्तिरस्करी । कुशस्थली पुण्ययशस्करी भुवः
01100272 पश्यन्ति नित्यं यदनुग्रहेषितं । स्मितावलोकं स्वपतिं स्म यत्प्रजाः
01100281 नूनं व्रतस्नानहुतादिनेश्वरः । समर्चितो ह्यस्य गृहीतपाणिभिः
01100282 पिबन्ति याः सख्यधरामृतं मुहुर् । व्रजस्त्रियः सम्मुमुहुर्यदाशयाः
01100291 या वीर्यशुल्केन हृताः स्वयंवरे । प्रमथ्य चैद्यप्रमुखान् हि शुष्मिणः
01100292 प्रद्युम्नसाम्बाम्बसुतादयोऽपरा । याश्चाहृता भौमवधे सहस्रशः
01100301 एताः परं स्त्रीत्वमपास्तपेशलं । निरस्तशौचं बत साधु कुर्वते
01100302 यासां गृहात् पुष्करलोचनः पतिर् । न जात्वपैत्याहृतिभिर्हृदि स्पृशन्
01100311 एवंविधा गदन्तीनां स गिरः पुरयोषिताम्
01100312 निरीक्षणेनाभिनन्दन् सस्मितेन ययौ हरिः
01100321 अजातशत्रुः पृतनां गोपीथाय मधुद्विषः
01100322 परेभ्यः शङ्कितः स्नेहात् प्रायुङ्क्त चतुरङ्गिणीम्
01100331 अथ दूरागतान् शौरिः कौरवान् विरहातुरान्

01100332 सन्निवर्त्य दृढं स्निग्धान् प्रायात् स्वनगरीं प्रियैः
01100341 कुरुजाङ्गलपाञ्चालान् शूरसेनान् सयामुनान्
01100342 ब्रह्मावर्तं कुरुक्षेत्रं मत्स्यान् सारस्वतान् अथ
01100351 मरुधन्वमतिक्रम्य सौवीराभीरयोः परान्
01100352 आनर्तान् भार्गवोपागाच् छ्रान्तवाहो मनाग् विभुः
01100361 तत्र तत्र ह तत्रत्यैर्हरिः प्रत्युद्यतार्हणः
01100362 सायं भेजे दिशं पश्चाद्गविष्ठो गां गतस्तदा

# Chapter 11

0111001 सूत उवाच
01110011 आनर्तान् स उपव्रज्य स्वृद्धा' जनपदान् स्वकान्
01110012 दध्मौ दरवरं तेषां विषादं शमयन्न् इव
01110021 स उच्चकाशे धवलोदरो दरो । 'प्युरुक्रमस्याधरशोणशोणिमा
01110022 दाध्मायमानः करकञ्जसम्पुटे । यथाब्जखण्डे कलहंस उत्स्वनः
01110031 तम् उपश्रुत्य निनदं जगद्भयभयावहम्
01110032 प्रत्युद्ययुः प्रजाः सर्वा भर्तृदर्शनलालसाः
01110041 तत्रोपनीतबलयो रवेर्दीपम् इवादृताः
01110042 आत्मारामं पूर्णकामं निजलाभेन नित्यदा
01110051 प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षगद्गदया गिरा
01110052 पितरं सर्वसुहृदमवितारम् इवार्भकाः
01110061 नताः स्म ते नाथ सदाङ्घ्रिपङ्कजं । विरिञ्चवैरिञ्च्यसुरेन्द्रवन्दितम्
01110062 परायणं क्षेममिहेच्छतां परं । न यत्र कालः प्रभवेत् परः प्रभुः
01110071 भवाय नस्त्वं भव विश्वभावन । त्वम् एव माताथ सुहृत्पतिः पिता
01110072 त्वं सद्गुरुर्नः परमं च दैवतं । यस्यानुवृत्त्या कृतिनो बभूविम
01110081 अहो सनाथा भवता स्म यद्वयं । त्रैविष्टपानामपि दूरदर्शनम्
01110082 प्रेमस्मितस्निग्धनिरीक्षणाननं । पश्येम रूपं तव सर्वसौभगम्
01110091 यर्ह्यम्बुजाक्षापससार भो भवान् । कुरून् मधून् वाथ सुहृद्दिदृक्षया
01110092 तत्राब्दकोटिप्रतिमः क्षणो भवेद् । रविं विनाक्ष्णोरिव नस्तवाच्युत
01110101*कथं वयं नाथ चिरोषिते त्वयि । प्रसन्नदृष्ट्याखिलतापशोषणम्
01110102*जीवेम ते सुन्दरहासशोभितम् । अपश्यमाना वदनं मनोहरम्
01110111 इति चोदीरिता वाचः प्रजानां भक्तवत्सलः
01110112 शृण्वानोऽनुग्रहं दृष्ट्या वितन्वन् प्राविशत् पुरम्
01110121 मधुभोजदशार्हार्हकुकुरान्धकवृष्णिभिः
01110122 आत्मतुल्यबलैर्गुप्तां नागैर्भोगवतीम् इव
01110131 सर्वर्तुसर्वविभवपुण्यवृक्षलताश्रमैः
01110132 उद्यानोपवनारामैर्वृतपद्माकरश्रियम्
01110141 गोपुरद्वारमार्गेषु कृतकौतुकतोरणाम्

01110142 चित्रध्वजपताकाग्रैरन्तः प्रतिहतातपाम्
01110151 सम्मार्जितमहामार्ग रथ्यापणकचत्वराम्
01110152 सिक्तां गन्धजलैरुप्तां फलपुष्पाक्षताङ्कुरैः
01110161 द्वारि द्वारि गृहाणां च दध्यक्षतफलेक्षुभिः
01110162 अलङ्कृतां पूर्णकुम्भैर्बलिभिर्धूपदीपकैः
01110171 निशम्य प्रेष्ठमायान्तं वसुदेवो महामनाः
01110172 अक्रूरश्चोग्रसेनश्च रामश्चाद्भुतविक्रमः
01110181 प्रद्युम्नश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः
01110182 प्रहर्षवेगोच्छशितशयनासनभोजनाः
01110191 वारणेन्द्रं पुरस्कृत्य ब्राह्मणैः ससुमङ्गलैः
01110192 शङ्खतूर्यनिनादेन ब्रह्मघोषेण चादृताः
01110193 प्रत्युज्जग्मू रथैर्हृष्टाः प्रणयागतसाध्वसाः
01110201 वारमुख्याश्च शतशो यानैस्तद्दर्शनोत्सुकाः
01110202 लसत्कुण्डलनिर्भातकपोलवदनश्रियः
01110211 नटनर्तकगन्धर्वाः सूतमागधवन्दिनः
01110212 गायन्ति चोत्तमश्लोकचरितान्यद्भुतानि च
01110221 भगवांस्तत्र बन्धूनां पौराणामनुवर्तिनाम्
01110222 यथाविध्युपसङ्गम्य सर्वेषां मानमादधे
01110231 प्रह्वाभिवादनाश्लेषकरस्पर्शस्मितेक्षणैः
01110232 आश्वास्य चाश्वपाकेभ्यो वरैश्चाभिमतैर्विभुः
01110241 स्वयं च गुरुभिर्विप्रैः सदारैः स्थविरैरपि
01110242 आशीर्भिर्युज्यमानोऽन्यैर्वन्दिभिश्चाविशत् पुरम्
01110251 राजमार्गं गते कृष्णे द्वारकायाः कुलस्त्रियः
01110252 हर्म्याण्यारुरुहुर्विप्र तदीक्षणमहोत्सवाः
01110261 नित्यं निरीक्षमाणानां यदपि द्वारकौकसाम्
01110262 न वितृप्यन्ति हि दृशः श्रियो धामाङ्गमच्युतम्
01110271 श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम्
01110272 बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम्
01110281 सितातपत्रव्यजनैरुपस्कृतः । प्रसूनवर्षैरभिवर्षितः पथि
01110282 पिशङ्गवासा वनमालया बभौ । घनो यथार्कोडुपचापवैद्युतैः
01110291 प्रविष्टस्तु गृहं पित्रोः परिष्वक्तः स्वमातृभिः
01110292 ववन्दे शिरसा सप्त देवकीप्रमुखा मुदा
01110301 ताः पुत्रमङ्कमारोप्य स्नेहस्नुतपयोधराः
01110302 हर्षविह्वलितात्मानः सिषिचुर्नेत्रजैर्जलैः
01110311 अथाविशत् स्वभवनं सर्वकाममनुत्तमम्
01110312 प्रासादा यत्र पत्नीनां सहस्राणि च षोडश
01110321 पत्न्यः पतिं प्रोष्य गृहानुपागतं । विलोक्य सञ्जातमनोमहोत्सवाः
01110322 उत्तस्थुरारात् सहसासनाशयात् । साकं व्रतैर्व्रीडितलोचनाननाः
01110331 तमात्मजैर्दृष्टिभिरन्तरात्मना । दुरन्तभावाः परिरेभिरे पतिम्

01110332 निरुद्धमप्यास्रवदम्बु नेत्रयोर् । विलज्जतीनां भृगुवर्य वैक्लवात्
01110341 यद्यप्यसौ पार्श्वगतो रहोगतस् । तथापि तस्याङ्घ्रियुगं नवं नवम्
01110342 पदे पदे का विरमेत तत्पदाच् । चलापि यच् छ्रीर्न जहाति कर्हिचित्
01110351 एवं नृपाणां क्षितिभारजन्मनाम् । अक्षौहिणीभिः परिवृत्ततेजसाम्
01110352 विधाय वैरं श्वसनो यथानलं । मिथो वधेनोपरतो निरायुधः
01110361 स एष नरलोकेऽस्मिन्न् अवतीर्णः स्वमायया
01110362 रेमे स्त्रीरत्नकूटस्थो भगवान् प्राकृतो यथा
01110371 उद्दामभावपिशुनामलवल्गुहास ।
01110372 व्रीडावलोकनिहतो मदनोऽपि यासाम्
01110373 सम्मुह्य चापमजहात् प्रमदोत्तमास्ता ।
01110374 यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः
01110381 तमयं मन्यते लोको ह्यसङ्गमपि सङ्गिनम्
01110382 आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुधः
01110391 एतदीशनम् ईशस्य प्रकृतिस्थोऽपि तद्गुणैः
01110392 न युज्यते सदात्मस्थैर्यथा बुद्धिस्तदाश्रया
01110401 तं मेनिरेऽबला मूढाः स्त्रैणं चानुव्रतं रहः
01110402 अप्रमाणविदो भर्तुरीश्वरं मतयो यथा

# Chapter 12

0112001 शौनक उवाच
01120011 अश्वत्थाम्नोपसृष्टेन ब्रह्मशीर्ष्णोरुतेजसा
01120012 उत्तराया हतो गर्भ ईशेनाजीवितः पुनः
01120021 तस्य जन्म महाबुद्धेः कर्माणि च महात्मनः
01120022 निधनं च यथैवासीत् स प्रेत्य गतवान् यथा
01120031 तदिदं श्रोतुम् इच्छामो गदितुं यदि मन्यसे
01120032 ब्रूहि नः श्रद्दधानानां यस्य ज्ञानमदाच् छुकः
0112004 सूत उवाच
01120041 अपीपलद्धर्मराजः पितृवद्रञ्जयन् प्रजाः
01120042 निःस्पृहः सर्वकामेभ्यः कृष्णपादानुसेवया
01120051 सम्पदः क्रतवो लोका महिषी भ्रातरो मही
01120052 जम्बूद्वीपाधिपत्यं च यशश्च त्रिदिवं गतम्
01120061 किं ते कामाः सुरस्पार्हा मुकुन्दमनसो द्विजाः
01120062 अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे
01120071 मातुर्गर्भगतो वीरः स तदा भृगुनन्दन
01120072 ददर्श पुरुषं कञ्चिद्दह्यमानोऽस्त्रतेजसा
01120081 अङ्गुष्ठमात्रममलं स्फुरत्पुरटमौलिनम्
01120082 अपीव्यदर्शनं श्यामं तडिद्वाससमच्युतम्
01120091 श्रीमद्दीर्घचतुर्बाहुं तप्तकाञ्चनकुण्डलम्
01120092 क्षतजाक्षं गदापाणिमात्मनः सर्वतो दिशम्
01120093 परिभ्रमन्तम् उल्काभां भ्रामयन्तं गदां मुहुः
01120101 अस्त्रतेजः स्वगदया नीहारम् इव गोपतिः
01120102 विधमन्तं सन्निकर्षे पर्यैक्षत क इत्यसौ
01120111 विधूय तदमेयात्मा भगवान् धर्मगुब् विभुः
01120112 मिषतो दशमासस्य तत्रैवान्तर्दधे हरिः
01120121 ततः सर्वगुणोदर्के सानुकूलग्रहोदये
01120122 जज्ञे वंशधरः पाण्डोर्भूयः पाण्डुरिवौजसा
01120131 तस्य प्रीतमना राजा विप्रैर्धौम्यकृपादिभिः

01120132 जातकं कारयामास वाचयित्वा च मङ्गलम्
01120141 हिरण्यं गां महीं ग्रामान् हस्त्यश्वान् नृपतिर्वरान्
01120142 प्रादात् स्वन्नं च विप्रेभ्यः प्रजातीर्थे स तीर्थवित्
01120151 तम् ऊचुर्ब्राह्मणास्तुष्टा राजानं प्रश्रयान्वितम्
01120152 एष ह्यस्मिन् प्रजातन्तौ पुरूणां पौरवर्षभ
01120161 दैवेनाप्रतिघातेन शुक्ले संस्थाम् उपेयुषि
01120162 रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना
01120171 तस्मान् नाम्ना विष्णुरात इति लोके भविष्यति
01120172 न सन्देहो महाभाग महाभागवतो महान्
0112018 श्रीराजोवाच
01120181 अप्येष वंश्यान् राजर्षीन् पुण्यश्लोकान् महात्मनः
01120182 अनुवर्तिता स्विद्यशसा साधुवादेन सत्तमाः
0112019 ब्राह्मणा ऊचुः
01120191 पार्थ प्रजाविता साक्षादिक्ष्वाकुरिव मानवः
01120192 ब्रह्मण्यः सत्यसन्धश्च रामो दाशरथिर्यथा
01120201 एष दाता शरण्यश्च यथा ह्यौशीनरः शिबिः
01120202 यशो वितनिता स्वानां दौष्यन्तिरिव यज्वनाम्
01120211 धन्विनामग्रणीरेष तुल्यश्चार्जुनयोर्द्वयोः
01120212 हुताश इव दुर्धर्षः समुद्र इव दुस्तरः
01120221 मृगेन्द्र इव विक्रान्तो निषेव्यो हिमवान् इव
01120222 तितिक्षुर्वसुधेवासौ सहिष्णुः पितराविव
01120231 पितामहसमः साम्ये प्रसादे गिरिशोपमः
01120232 आश्रयः सर्वभूतानां यथा देवो रमाश्रयः
01120241 सर्वसद्गुणमाहात्म्ये एष कृष्णमनुव्रतः
01120242 रन्तिदेव इवोदारो ययातिरिव धार्मिकः
01120251 हृत्या बलिसमः कृष्णे प्रह्राद इव सद्ग्रहः
01120252 आहर्तैषोऽश्वमेधानां वृद्धानां पर्युपासकः
01120261 राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम्
01120262 निग्रहीता कलेरेष भुवो धर्मस्य कारणात्
01120271 तक्षकादात्मनो मृत्युं द्विजपुत्रोपसर्जितात्
01120272 प्रपत्स्यत उपश्रुत्य मुक्तसङ्गः पदं हरेः
01120281 जिज्ञासितात्मयाथार्थ्यो मुनेर्व्याससुतादसौ
01120282 हित्वेदं नृप गङ्गायां यास्यत्यद्धाकुतोभयम्
01120291 इति राज्ञ उपादिश्य विप्रा जातककोविदाः
01120292 लब्धापचितयः सर्वे प्रतिजग्मुः स्वकान् गृहान्
01120301 स एष लोके विख्यातः परीक्षिदिति यत् प्रभुः
01120302 पूर्वं दृष्टमनुध्यायन् परीक्षेत नरेष्विह
01120311 स राजपुत्रो ववृधे आशु शुक्ल इवोडुपः
01120312 आपूर्यमाणः पितृभिः काष्ठाभिरिव सोऽन्वहम्

01120321 यक्ष्यमाणोऽश्वमेधेन ज्ञातिद्रोहजिहासया
01120322 राजा लब्धधनो दध्यौ नान्यत्र करदण्डयोः
01120331 तदभिप्रेतमालक्ष्य भ्रातरो ऽच्युतचोदिताः
01120332 धनं प्रहीणमाजह्रुरुदीच्यां दिशि भूरिशः
01120341 तेन सम्भृतसम्भारो धर्मपुत्रो युधिष्ठिरः
01120342 वाजिमेधैस्त्रिभिर्भीतो यज्ञैः समयजद्धरिम्
01120351 आहूतो भगवान् राज्ञा याजयित्वा द्विजैर्नृपम्
01120352 उवास कतिचिन् मासान् सुहृदां प्रियकाम्यया
01120361 ततो राज्ञाभ्यनुज्ञातः कृष्णया सहबन्धुभिः
01120362 ययौ द्वारवतीं ब्रह्मन् सार्जुनो यदुभिर्वृतः

# Chapter 13

0113001 सूत उवाच
01130011 विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम्
01130012 ज्ञात्वागाद्धास्तिनपुरं तयावाप्तविवित्सितः
01130021 यावतः कृतवान् प्रश्नान् क्षत्ता कौषारवाग्रतः
01130022 जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह
01130031 तं बन्धुमागतं दृष्ट्वा धर्मपुत्रः सहानुजः
01130032 धृतराष्ट्रो युयुत्सुश्च सूतः शारद्वतः पृथा
01130041 गान्धारी द्रौपदी ब्रह्मन् सुभद्रा चोत्तरा कृपी
01130042 अन्याश्च जामयः पाण्डोर्ज्ञातयः ससुताः स्त्रियः
01130051 प्रत्युज्जग्मुः प्रहर्षेण प्राणं तन्व इवागतम्
01130052 अभिसङ्गम्य विधिवत् परिष्वङ्गाभिवादनैः
01130061 मुमुचुः प्रेमबाष्पौघं विरहौत्कण्ठ्यकातराः
01130062 राजा तमर्हयां चक्रे कृतासनपरिग्रहम्
01130071 तं भुक्तवन्तं विश्रान्तमासीनं सुखमासने
01130072 प्रश्रयावनतो राजा प्राह तेषां च शृण्वताम्
0113008 युधिष्ठिर उवाच
01130081 अपि स्मरथ नो युष्मत्पक्षच्छायासमेधितान्
01130082 विपद्गणाद्विषाग्न्यादेर्मोचिता यत् समातृकाः
01130091 कया वृत्त्या वर्तितं वश्चरद्भिः क्षितिमण्डलम्
01130092 तीर्थानि क्षेत्रमुख्यानि सेवितानीह भूतले
01130101 भवद्विधा भागवतास्तीर्थभूताः स्वयं विभो
01130102 तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृता
01130111 अपि नः सुहृदस्तात बान्धवाः कृष्णदेवताः
01130112 दृष्टाः श्रुता वा यदवः स्वपुर्यां सुखमासते
01130121 इत्युक्तो धर्मराजेन सर्वं तत् समवर्णयत्
01130122 यथानुभूतं क्रमशो विना यदुकुलक्षयम्
01130131 नन्वप्रियं दुर्विषहं नृणां स्वयम् उपस्थितम्
01130132 नावेदयत् सकरुणो दुःखितान् द्रष्टुमक्षमः

01130141 कञ्चित् कालमथावात्सीत् सत्कृतो देववत् सुखम्
01130142 भ्रातुर्ज्येष्ठस्य श्रेयस्कृत् सर्वेषां सुखमावहन्
01130151 अबिभ्रदर्यमा दण्डं यथावदघकारिषु
01130152 यावद्दधार शूद्रत्वं शापाद्वर्षशतं यमः
01130161 युधिष्ठिरो लब्धराज्यो दृष्ट्वा पौत्रं कुलन्धरम्
01130162 भ्रातृभिर्लोकपालाभैर्मुमुदे परया श्रिया
01130171 एवं गृहेषु सक्तानां प्रमत्तानां तदीहया
01130172 अत्यक्रामदविज्ञातः कालः परमदुस्तरः
01130181 विदुरस्तदभिप्रेत्य धृतराष्ट्रमभाषत
01130182 राजन् निर्गम्यतां शीघ्रं पश्येदं भयमागतम्
01130191 प्रतिक्रिया न यस्येह कुतश्चित् कर्हिचित् प्रभो
01130192 स एष भगवान् कालः सर्वेषां नः समागतः
01130201 येन चैवाभिपन्नोऽयं प्राणैः प्रियतमैरपि
01130202 जनः सद्यो वियुज्येत किम् उतान्यैर्धनादिभिः
01130211 पितृभ्रातृसुहृत्पुत्रा हतास्ते विगतं वयम्
01130212 आत्मा च जरया ग्रस्तः परगेहम् उपाससे
01130221”अन्धः पुरैव वधिरो मन्दप्रज्ञाश्च साम्प्रतम्
01130222”विशीर्णदन्तो मन्दाग्निः सरागः कफम् उद्वहन्
01130231 अहो महीयसी जन्तोर्जीविताशा यथा भवान्
01130232 भीमापवर्जितं पिण्डमादत्ते गृहपालवत्
01130241 अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः
01130242 हृतं क्षेत्रं धनं येषां तद्दत्तैरसुभिः कियत्
01130251 तस्यापि तव देहोऽयं कृपणस्य जिजीविषोः
01130252 परैत्यनिच्छतो जीर्णो जरया वाससी इव
01130261 गतस्वार्थम् इमं देहं विरक्तो मुक्तबन्धनः
01130262 अविज्ञातगतिर्जह्यात् स वै धीर उदाहृतः
01130271 यः स्वकात् परतो वेह जातनिर्वेद आत्मवान्
01130272 हृदि कृत्वा हरिं गेहात् प्रव्रजेत् स नरोत्तमः
01130281 अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान्
01130282 इतोऽर्वाक् प्रायशः कालः पुंसां गुणविकर्षणः
01130291 एवं राजा विदुरेणानुजेन । प्रज्ञाचक्षुर्बोधित आजमीढः
01130292 छित्त्वा स्वेषु स्नेहपाशान् द्रढिम्नो । निश्चक्राम भ्रातृसन्दर्शिताध्वा
01130301 पतिं प्रयान्तं सुबलस्य पुत्री । पतिव्रता चानुजगाम साध्वी
01130302 हिमालयं न्यस्तदण्डप्रहर्षं । मनस्विनाम् इव सत् सम्प्रहारः
01130311 अजातशत्रुः कृतमैत्रो हुताग्निर् । विप्रान् नत्वा तिलगोभूमिरुक्मैः
01130312 गृहं प्रविष्टो गुरुवन्दनाय । न चापश्यत् पितरौ सौबलीं च
01130321 तत्र सञ्जयमासीनं पप्रच्छोद्विग्नमानसः
01130322 गावल्गणे क्व नस्तातो वृद्धो हीनश्च नेत्रयोः
01130331 अम्बा च हतपुत्रार्ता पितृव्यः क्व गतः सुहृत्
01130332 अपि मय्यकृतप्रज्ञे हतबन्धुः स भार्यया

01130333 आशंसमानः शमलं गङ्गायां दुःखितोऽपतत्
01130341 पितर्युपरते पाण्डौ सर्वान् नः सुहृदः शिशून्
01130342 अरक्षतां व्यसनतः पितृव्यौ क्व गतावितः
0113035 सूत उवाच
01130351 कृपया स्नेहवैक्लव्यात् सूतो विरहकर्शितः
01130352 आत्मेश्वरमचक्षाणो न प्रत्याहातिपीडितः
01130361 विमृज्याश्रूणि पाणिभ्यां विष्टभ्यात्मानमात्मना
01130362 अजातशत्रुं प्रत्यूचे प्रभोः पादावनुस्मरन्
0113037 सञ्जय उवाच
01130371 नाहं वेद व्यवसितं पित्रोर्वः कुलनन्दन
01130372 गान्धार्या वा महाबाहो मुषितोऽस्मि महात्मभिः
01130381 अथाजगाम भगवान् नारदः सहतुम्बुरुः
01130382 प्रत्युत्थायाभिवाद्याह सानुजोऽभ्यर्चयन् मुनिम्
0113039 युधिष्ठिर उवाच
01130391 नाहं वेद गतिं पित्रोर्भगवन् क्व गतावितः
01130392 अम्बा वा हतपुत्रार्ता क्व गता च तपस्विनी
01130401 कर्णधार इवापारे भगवान् पारदर्शकः
01130402 अथाबभाषे भगवान् नारदो मुनिसत्तमः
0113041 नारद उवाच
01130411 मा कञ्चन शुचो राजन् यदीश्वरवशं जगत्
01130412 लोकाः सपाला यस्येमे वहन्ति बलिम् ईशितुः
01130413 स संयुनक्ति भूतानि स एव वियुनक्ति च
01130421 यथा गावो नसि प्रोतास्तन्त्यां बद्धाश्च दामभिः
01130422 वाक्तन्त्यां नामभिर्बद्धा वहन्ति बलिम् ईशितुः
01130431 यथा क्रीडोपस्कराणां संयोगविगमाविह
01130432 इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम्
01130441 यन् मन्यसे ध्रुवं लोकमध्रुवं वा न चोभयम्
01130442 सर्वथा न हि शोच्यास्ते स्नेहादन्यत्र मोहजात्
01130451 तस्माज् जह्यङ्ग वैक्लव्यमज्ञानकृतमात्मनः
01130452 कथं त्वनाथाः कृपणा वर्तेरंस्ते च मां विना
01130461 कालकर्मगुणाधीनो देहोऽयं पाञ्चभौतिकः
01130462 कथमन्यांस्तु गोपायेत् सर्पग्रस्तो यथा परम्
01130471 अहस्तानि सहस्तानामपदानि चतुष्पदाम्
01130472 फल्गूनि तत्र महतां जीवो जीवस्य जीवनम्
01130481 तदिदं भगवान् राजन्न् एक आत्मात्मनां स्वदृक्
01130482 अन्तरोऽनन्तरो भाति पश्य तं माययोरुधा
01130491 सोऽयमद्य महाराज भगवान् भूतभावनः
01130492 कालरूपोऽवतीर्णोऽस्यामभावाय सुरद्विषाम्
01130501 निष्पादितं देवकृत्यमवशेषं प्रतीक्षते
01130502 तावद्यूयमवेक्षध्वं भवेद्यावदिहेश्वरः

01130511 धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया
01130512 दक्षिणेन हिमवत ऋषीणामाश्रमं गतः
01130521 स्रोतोभिः सप्तभिर्या वै स्वर्धुनी सप्तधा व्यधात्
01130522 सप्तानां प्रीतये नाना सप्तस्रोतः प्रचक्षते
01130531 स्नात्वानुसवनं तस्मिन् हुत्वा चाग्नीन् यथाविधि
01130532 अब्भक्ष उपशान्तात्मा स आस्ते विगतैषणः
01130541 जितासनो जितश्वासः प्रत्याहृतषडिन्द्रियः
01130542 हरिभावनया ध्वस्तरजःसत्त्वतमोमलः
01130551 विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम्
01130552 ब्रह्मण्यात्मानमाधारे घटाम्बरम् इवाम्बरे
01130561 ध्वस्तमायागुणोदर्को निरुद्धकरणाशयः
01130562 निवर्तिताखिलाहार आस्ते स्थाणुरिवाचलः
01130563 तस्यान्तरायो मैवाभूः सन्न्यस्ताखिलकर्मणः
01130571 स वा अद्यतनाद्राजन् परतः पञ्चमेऽहनि
01130572 कलेवरं हास्यति स्वं तच् च भस्मीभविष्यति
01130581 दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे
01130582 बहिः स्थिता पतिं साध्वी तमग्निमनु वेक्ष्यति
01130591 विदुरस्तु तदाश्चर्यं निशाम्य कुरुनन्दन
01130592 हर्षशोकयुतस्तस्माद्गन्ता तीर्थनिषेवकः
01130601 इत्युक्त्वाथारुहत् स्वर्गं नारदः सहतुम्बुरुः
01130602 युधिष्ठिरो वचस्तस्य हृदि कृत्वाजहाच् छुचः

# Chapter 14

0114001 सूत उवाच
01140011 सम्प्रस्थिते द्वारकायांजिष्णौ बन्धुदिदृक्षया
01140012 ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम्
01140021 व्यतीताः कतिचिन् मासास्तदा नायात् ततोऽर्जुनः
01140022 ददर्श घोररूपाणि निमित्तानि कुरूद्वहः
01140031 कालस्य च गतिं रौद्रां विपर्यस्तर्तुधर्मिणः
01140032 पापीयसीं नृणां वार्तां क्रोधलोभानृतात्मनाम्
01140041 जिह्मप्रायं व्यवहृतं शाठ्यमिश्रं च सौहृदम्
01140042 पितृमातृसुहृद्भ्रातृदम्पतीनां च कल्कनम्
01140051 निमित्तान्यत्यरिष्टानि काले त्वनुगते नृणाम्
01140052 लोभाद्यधर्मप्रकृतिं दृष्ट्वोवाचानुजं नृपः
0114006 युधिष्ठिर उवाच
01140061 सम्प्रेषितो द्वारकायां जिष्णुर्बन्धुदिदृक्षयाज्
01140062 ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम्
01140071 गताः सप्ताधुना मासा भीमसेन तवानुजः
01140072 नायाति कस्य वा हेतोर्नाहं वेदेदमञ्जसा
01140081 अपि देवर्षिणादिष्टः स कालोऽयम् उपस्थितः
01140082 यदात्मनोऽङ्गमाक्रीडं भगवान् उत्सिसृक्षति
01140091 यस्मान् नः सम्पदो राज्यं दाराः प्राणाः कुलं प्रजाः
01140092 आसन् सपत्नविजयो लोकाश्च यदनुग्रहात्
01140101 पश्योत्पातान् नरव्याघ्र दिव्यान् भौमान् सदैहिकान्
01140102 दारुणान् शंसतोऽदूराद्भयं नो बुद्धिमोहनम्
01140111 ऊर्वक्षिबाहवो मह्यं स्फुरन्त्यङ्ग पुनः पुनः
01140112 वेपथुश्चापि हृदये आराद्दास्यन्ति विप्रियम्
01140121 शिवैषोद्यन्तमादित्यमभिरौत्यनलानना
01140122 मामङ्ग सारमेयोऽयमभिरेभत्यभीरुवत्
01140131 शस्ताः कुर्वन्ति मां सव्यं दक्षिणं पशवोऽपरे
01140132 वाहांश्च पुरुषव्याघ्र लक्षये रुदतो मम

01140141 मृत्युदूतः कपोतोऽयम् उलूकः कम्पयन् मनः
01140142 प्रत्युलूकश्च कुह्वानैर्विश्वं वै शून्यम् इच्छतः
01140151 धूम्रा दिशः परिधयः कम्पते भूः सहाद्रिभिः
01140152 निर्घातश्च महांस्तात साकं च स्तनयित्नुभिः
01140161 वायुर्वाति खरस्पर्शो रजसा विसृजंस्तमः
01140162 असृग् वर्षन्ति जलदा बीभत्सम् इव सर्वतः
01140171 सूर्यं हतप्रभं पश्य ग्रहमर्दं मिथो दिवि
01140172 ससङ्कुलैर्भूतगणैर्ज्वलिते इव रोदसी
01140181 नद्यो नदाश्च क्षुभिताः सरांसि च मनांसि च
01140182 न ज्वलत्यग्निराज्येन कालोऽयं किं विधास्यति
01140191 न पिबन्ति स्तनं वत्सा न दुह्यन्ति च मातरः
01140192 रुदन्त्यश्रुमुखा गावो न हृष्यन्त्यृषभा व्रजे
01140201 दैवतानि रुदन्तीव स्विद्यन्ति ह्युच्चलन्ति च
01140202 इमे जनपदा ग्रामाः पुरोद्यानाकराश्रमाः
01140203 भ्रष्टश्रियो निरानन्दाः किमघं दर्शयन्ति नः
01140211 मन्य एतैर्महोत्पातैर्नूनं भगवतः पदैः
01140212 अनन्यपुरुषश्रीभिर्हीना भूर्हतसौभगा
01140221 इति चिन्तयतस्तस्य दृष्टारिष्टेन चेतसा
01140222 राज्ञः प्रत्यागमद्ब्रह्मन् यदुपुर्याः कपिध्वजः
01140231 तं पादयोर्निपतितमयथापूर्वमातुरम्
01140232 अधोवदनमब्बिन्दून् सृजन्तं नयनाब्जयोः
01140241 विलोक्योद्विग्नहृदयो विच्छायमनुजं नृपः
01140242 पृच्छति स्म सुहृन् मध्ये संस्मरन् नारदेरितम्
0114025 युधिष्ठिर उवाच
01140251 कच्चिदानर्तपुर्यां नः स्वजनाः सुखमासते
01140252 मधुभोजदशार्हार्ह सात्वतान्धकवृष्णयः
01140261 शूरो मातामहः कच्चित् स्वस्त्यास्ते वाथ मारिषः
01140262 मातुलः सानुजः कच्चित् कुशल्यानकदुन्दुभिः
01140271 सप्त स्वसारस्तत्पत्न्यो मातुलान्यः सहात्मजाः
01140272 आसते सस्नुषाः क्षेमंदेवकीप्रमुखाः स्वयम्
01140281 कच्चिद्राजाहुको जीवत्यसत्पुत्रोऽस्य चानुजः
01140282 हृदीकः ससुतोऽक्रूरो जयन्तगदसारणाः
01140291 आसते कुशलं कच्चिद्ये च शत्रुजिदादयः
01140292 कच्चिदास्ते सुखं रामो भगवान् सात्वतां प्रभुः
01140301 प्रद्युम्नः सर्ववृष्णीनां सुखमास्ते महारथः
01140302 गम्भीररयोऽनिरुद्धो वर्धते भगवान् उत
01140311 सुषेणश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः
01140312 अन्ये च कार्ष्णिप्रवराः सपुत्रा ऋषभादयः
01140321 तथैवानुचराः शौरेः श्रुतदेवोद्धवादयः

01140322 सुनन्दनन्दशीर्षण्या ये चान्ये सात्वतर्षभाः
01140331 अपि स्वस्त्यासते सर्वे रामकृष्णभुजाश्रयाः
01140332 अपि स्मरन्ति कुशलमस्माकं बद्धसौहृदाः
01140341 भगवान् अपि गोविन्दो ब्रह्मण्यो भक्तवत्सलः
01140342 कच्चित् पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः
01140351 मङ्गलाय च लोकानां क्षेमाय च भवाय च
01140352 आस्ते यदुकुलाम्भोधावाद्योऽनन्तसखः पुमान्
01140361 यद्बाहुदण्डगुप्तायां स्वपुर्यां यदवोऽर्चिताः
01140362 क्रीडन्ति परमानन्दं महापौरुषिका इव
01140371 यत्पादशुश्रूषणमुख्यकर्मणा ।सत्यादयो द्व्यष्टसहस्रयोषितः
01140372 निर्जित्य सङ्ख्ये त्रिदशांस्तदाशिषो ।हरन्ति वज्रायुधवल्लभोचिताः
01140381 यद्बाहुदण्डाभ्युदयानुजीविनो ।यदुप्रवीरा ह्यकुतोभया मुहुः
01140382 अधिक्रमन्त्यङ्घ्रिभिराहृतां बलात् ।सभां सुधर्मां सुरसत्तमोचिताम्
01140391 कच्चित् तेऽनामयं तात भ्रष्टतेजा विभासि मे
01140392 अलब्धमानोऽवज्ञातः किं वा तात चिरोषितः
01140401 कच्चिन् नाभिहतोऽभावैः शब्दादिभिरमङ्गलैः
01140402 न दत्तम् उक्तमर्थिभ्य आशया यत् प्रतिश्रुतम्
01140411 कच्चित् त्वं ब्राह्मणं बालं गां वृद्धं रोगिणं स्त्रियम्
01140412 शरणोपसृतं सत्त्वं नात्याक्षीः शरणप्रदः
01140421 कच्चित् त्वं नागमोऽगम्यां गम्यां वासत्कृतां स्त्रियम्
01140422 पराजितो वाथ भवान् नोत्तमैर्नासमैः पथि
01140431 अपि स्वित् पर्यभुङ्क्थास्त्वं सम्भोज्यान् वृद्धबालकान्
01140432 जुगुप्सितं कर्म किञ्चित् कृतवान् न यदक्षमम्
01140441 कच्चित् प्रेष्ठतमेनाथ हृदयेनात्मबन्धुना
01140442 शून्योऽस्मि रहितो नित्यं मन्यसे तेऽन्यथा न रुक्

# Chapter 15

0115001 सूत उवाच
01150011 एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञा विकल्पितः
01150012 नानाशङ्कास्पदं रूपं कृष्णविश्लेषकर्शितः
01150021 शोकेन शुष्यद्वदन हृत्सरोजो हतप्रभः
01150022 विभुं तम् एवानुस्मरन् नाशक्नोत् प्रतिभाषितुम्
01150031 कृच्छ्रेण संस्तभ्य शुचः पाणिनामृज्य नेत्रयोः
01150032 परोक्षेण समुन्नद्ध प्रणयौत्कण्ठ्यकातरः
01150041 सख्यं मैत्रीं सौहृदं च सारथ्यादिषु संस्मरन्
01150042 नृपमग्रजम् इत्याह बाष्पगद्गदया गिरा
0115005 अर्जुन उवाच
01150051 वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा
01150052 येन मेऽपहृतं तेजो देवविस्मापनं महत्
01150061 यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः
01150062 उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा
01150071 यत्संश्रयाद्द्रुपदगेहम् उपागतानां ।राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम्
01150072 तेजो हृतं खलु मयाभिहतश्च मत्स्यः ।सज्जीकृतेन धनुषाधिगता च कृष्णा
01150081 यत्सन्निधावहमु खाण्डवमग्नयेऽदाम् ।इन्द्रं च सामरगणं तरसा विजित्य
01150082 लब्धा सभा मयकृताद्भुतशिल्पमाया ।दिग्भ्योऽहरन् नृपतयो बलिमध्वरे ते
01150091 यत्तेजसा नृपशिरो’ङ्घ्रिमहन् मखार्थम् ।आर्योऽनुजस्तव गजायुतसत्त्ववीर्यः
01150092 तेनाहृताः प्रमथनाथमखाय भूपा ।यन्मोचितास्तदनयन् बलिमध्वरे ते
01150101 पत्न्यास्तवाधिमखक्लृप्तमहाभिषेक ।श्लाघिष्ठचारुकबरं कितवैः सभायाम्
01150102 स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्या ।यस्तत्स्त्रियोऽकृतहतेशविमुक्तकेशाः
01150111 यो नो जुगोप वन एत्य दुरन्तकृच्छ्राद् ।दुर्वाससोऽरिरचितादयुताग्रभुग्
यः
01150112 शाकान्नशिष्टम् उपयुज्य यतस्त्रिलोकीं ।तृप्ताममंस्त सलिले विनिमग्नसङ्घः
01150121 यत्तेजसाथ भगवान् युधि शूलपाणिर् ।विस्मापितः सगिरिजोऽस्त्रमदान्
निजं मे
01150122 अन्येऽपि चाहममुनैव कलेवरेण ।प्राप्तो महेन्द्रभवने महदासनार्धम्

01150131 तत्रैव मे विहरतो भुजदण्डयुग्मं । गाण्डीवलक्षणमरातिवधाय देवाः
01150132 सेन्द्राः श्रिता यदनुभावितमाजमीढ । तेनाहमद्य मुषितः पुरुषेण भूम्ना
01150141 यद्बान्धवः कुरुबलाब्धिमनन्तपारम् । एको रथेन ततरेऽहमतीर्यसत्त्वम्
01150142 प्रत्याहृतं बहु धनं च मया परेषां । तेजास्पदं मणिमयं च हृतं शिरोभ्यः
01150151 यो भीष्मकर्णगुरुशल्यचमूष्वदभ्र । राजन्यवर्यरथमण्डलमण्डितासु
01150152 अग्रेचरो मम विभो रथयूथपानाम् । आयुर्मनांसि च दृशा सह ओज आर्च्छत्
01150161 यद्दोःषु मा प्रणिहितं गुरुभीष्मकर्ण । नप्तृत्रिगर्तशल्यसैन्धवबाह्लिकाद्यैः
01150162 अस्त्राण्यमोघमहिमानि निरूपितानि । नोपस्पृशुर्नृहरिदासम् इवासुराणि
01150171 सौत्ये वृतः कुमतिनात्मद ईश्वरो मे । यत्पादपद्ममभवाय भजन्ति भव्याः
01150172 मां श्रान्तवाहमरयो रथिनो भुविष्ठं । न प्राहरन् यदनुभावनिरस्तचित्ताः
01150181 नर्माण्युदाररुचिरस्मितशोभितानि । हे पार्थ हेऽर्जुन सखे कुरुनन्दनेति
01150182 सञ्जल्पितानि नरदेव हृदिस्पृशानि । स्मर्तुर्लुठन्ति हृदयं मम माधवस्य
01150191 शय्यासनाटनविकत्थनभोजनादिष्व् । ऐक्याद्वयस्य ऋतवान् इति विप्रलब्धः
01150192 सख्युः सखेव पितृवत् तनयस्य सर्वं । सेहे महान् महितया कुमतेरघं मे
01150201 सोऽहं नृपेन्द्र रहितः पुरुषोत्तमेन । सख्या प्रियेण सुहृदा हृदयेन शून्यः
01150202 अध्वन्युरुक्रमपरिग्रहमङ्ग रक्षन् । गोपैरसद्भिरबलेव विनिर्जितोऽस्मि
01150211 तद्वै धनुस्त इषवः स रथो हयास्ते । सोऽहं रथी नृपतयो यत आनमन्ति
01150212 सर्वं क्षणेन तदभूदसदीशरिक्तं । भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम्
01150221 राजंस्त्वयानुपृष्टानां सुहृदां नः सुहृत्पुरे
01150222 विप्रशापविमूढानां निघ्नतां मुष्टिभिर्मिथः
01150231 वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम्
01150232 अजानताम् इवान्योन्यं चतुःपञ्चावशेषिताः
01150241 प्रायेणैतद्भगवत ईश्वरस्य विचेष्टितम्
01150242 मिथो निघ्नन्ति भूतानि भावयन्ति च यन् मिथः
01150251 जलौकसां जले यद्वन् महान्तोऽदन्त्यणीयसः
01150252 दुर्बलान् बलिनो राजन् महान्तो बलिनो मिथः
01150261 एवं बलिष्ठैर्यदुभिर्महद्भिरितरान् विभुः
01150262 यदून् यदुभिरन्योन्यं भूभारान् सञ्जहार ह
01150271 देशकालार्थयुक्तानि हृत्तापोपशमानि च
01150272 हरन्ति स्मरतश्चित्तं गोविन्दाभिहितानि मे
0115028 सूत उवाच
01150281 एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम्
01150282 सौहार्देनातिगाढेन शान्तासीद्विमला मतिः
01150291 वासुदेवाङ्घ्र्यनुध्यान परिबृंहितरंहसा
01150292 भक्त्या निर्मथिताशेष कषायधिषणोऽर्जुनः
01150301 गीतं भगवता ज्ञानं यत् तत् सङ्गाममूर्धनि
01150302 कालकर्मतमोरुद्धं पुनरध्यगमत् प्रभुः
01150311 विशोको ब्रह्मसम्पत्त्या सञ्छिन्नद्वैतसंशयः

01150312 लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः
01150321 निशम्य भगवन्मार्गं संस्थां यदुकुलस्य च
01150322 स्वःपथाय मतिं चक्रे निभृतात्मा युधिष्ठिरः
01150331 पृथाप्यनुश्रुत्य धनञ्जयोदितं । नाशं यदूनां भगवद्गतिं च ताम्
01150332 एकान्तभक्त्या भगवत्यधोक्षजे । निवेशितात्मोपरराम संसृतेः
01150341 ययाहरद्भुवो भारं तां तनुं विजहावजः
01150342 कण्टकं कण्टकेनेव द्वयं चापीशितुः समम्
01150351 यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः
01150352 भूभारः क्षपितो येनजहौ तच् च कलेवरम्
01150361 यदा मुकुन्दो भगवान् इमां महीं । जहौ स्वतन्वा श्रवणीयसत्कथः
01150362 तदाहरेवाप्रतिबुद्धचेतसाम् । अभद्रहेतुः कलिरन्ववर्तत
01150371 युधिष्ठिरस्तत् परिसर्पणं बुधः पुरे च राष्ट्रे च गृहे तथात्मनि
01150372 विभाव्य लोभानृतजिह्महिंसनाद्यधर्मचक्रं गमनाय पर्यधात्
01150381 स्वराट् पौत्रं विनयिनमात्मनः सुसमं गुणैः
01150382 तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्गजाह्वये
01150391 मथुरायां तथा वज्रं शूरसेनपतिं ततः
01150392 प्राजापत्यां निरूप्येष्टिमग्नीन् अपिबदीश्वरः
01150401 विसृज्य तत्र तत् सर्वं दुकूलवलयादिकम्
01150402 निर्ममो निरहङ्कारः सञ्छिन्नाशेषबन्धनः
01150411 वाचं जुहाव मनसि तत् प्राण इतरे च तम्
01150412 मृत्यावपानं सोत्सर्गं तं पञ्चत्वे ह्यजोहवीत्
01150421 त्रित्वे हुत्वा च पञ्चत्वं तच् चैकत्वे ऽजुहोन् मुनिः
01150422 सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये
01150431 चीरवासा निराहारो बद्धवाङ् मुक्तमूर्धजः
01150432 दर्शयन्न् आत्मनो रूपं जडोन्मत्तपिशाचवत्
01150441 अनवेक्षमाणो निरगादशृण्वन् बधिरो यथा
01150442 उदीचीं प्रविवेशाशां गतपूर्वां महात्मभिः
01150443 हृदि ब्रह्म परं ध्यायन् नावर्तेत यतो गतः
01150451 सर्वे तमनुनिर्जग्मुर्भ्रातरः कृतनिश्चयाः
01150452 कलिनाधर्ममित्रेण दृष्ट्वा स्पृष्टाः प्रजा भुवि
01150461 ते साधुकृतसर्वार्था ज्ञात्वात्यन्तिकमात्मनः
01150462 मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम्
01150471 तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे
01150472 तस्मिन् नारायणपदे एकान्तमतयो गतिम्
01150481 अवापुर्दुरवापां ते असद्भिर्विषयात्मभिः
01150482 विधूतकल्मषा स्थानं विरजेनात्मनैव हि
01150491 विदुरोऽपि परित्यज्य प्रभासे देहमात्मनः
01150492 कृष्णावेशेन तच्चित्तः पितृभिः स्वक्षयं ययौ
01150501 द्रौपदी च तदाज्ञाय पतीनामनपेक्षताम्

01150502 वासुदेवे भगवति ह्येकान्तमतिराप तम्
01150511 यः श्रद्धयैतद्भगवत्प्रियाणां । पाण्डोः सुतानाम् इति सम्प्रयाणम्
01150512 शृणोत्यलं स्वस्त्ययनं पवित्रं । लब्ध्वा हरौ भक्तिम् उपैति सिद्धिम्

# Chapter 16

0116001 सूत उवाच
01160011 ततः परीक्षिद्द्विजवर्यशिक्षया ।महीं महाभागवतः शशास ह
01160012 यथा हि सूत्यामभिजातकोविदाः ।समादिशन् विप्र महद्गुणस्तथा
01160021 स उत्तरस्य तनयाम् उपयेम इरावतीम्
01160022 जनमेजयादींश्चतुरस्तस्याम् उत्पादयत् सुतान्
01160031 आजहाराश्वमेधांस्त्रीन् गङ्गायां भूरिदक्षिणान्
01160032 शारद्वतं गुरुं कृत्वा देवा यत्राक्षिगोचराः
01160041 निजग्राहौजसा वीरः कलिं दिग्विजये क्वचित्
01160042 नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा
0116005 शौनक उवाच
01160051 कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः
01160052 नृदेवचिह्नधृक् शूद्र कोऽसौ गां यः पदाहनत्
01160053 तत् कथ्यतां महाभाग यदि कृष्णकथाश्रयम्
01160061 अथवास्य पदाम्भोज मकरन्दलिहां सताम्
01160062 किमन्यैरसदालापैरायुषो यदसद्व्ययः
01160071 क्षुद्रायुषां नृणामङ्ग मर्त्यानाम् ऋतम् इच्छताम्
01160072 इहोपहूतो भगवान् मृत्युः शामित्रकर्मणि
01160081 न कश्चिन् म्रियते तावद्यावदास्त इहान्तकः
01160082 एतदर्थं हि भगवान् आहूतः परमर्षिभिः
01160083 अहो नृलोके पीयेत हरिलीलामृतं वचः
01160091 मन्दस्य मन्दप्रज्ञस्य वयो मन्दायुषश्च वै
01160092 निद्रया ह्रियते नक्तं दिवा च व्यर्थकर्मभिः
0116010 सूत उवाच
01160101 यदा परीक्षित् कुरुजाङ्गलेऽवसत् ।कलिं प्रविष्टं निजचक्रवर्तिते
01160102 निशम्य वार्तामनतिप्रियां ततः ।शरासनं संयुगशौण्डिराददे
01160111 स्वलङ्कृतं श्यामतुरङ्गयोजितं ।रथं मृगेन्द्रध्वजमाश्रितः पुरात्
01160112 वृतो रथाश्वद्विपपत्तियुक्तया ।स्वसेनया दिग्विजयाय निर्गतः
01160121 भद्राश्वं केतुमालं च भारतं चोत्तरान् कुरून्

01160122 किम्पुरुषादीनि वर्षाणि विजित्य जगृहे बलिम्
01160131*नगरांश्च वनांश्चैव नदीश्च विमलोदकाः
01160132*पुरुषान् देवकल्पांश्च नारीश्च प्रियदर्शनाः
01160141*अदृष्टपूर्वान् सुभगान् स ददर्श धनञ्जयः
01160142*सदनानि च शुभ्राणि नारीश्चाप्सरसां निभाः
01160151 तत्र तत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम्
01160152 प्रगीयमाणं च यशः कृष्णमाहात्म्यसूचकम्
01160161 आत्मानं च परित्रातमश्वत्थाम्नोऽस्त्रतेजसः
01160162 स्नेहं च वृष्णिपार्थानां तेषां भक्तिं च केशवे
01160171 तेभ्यः परमसन्तुष्टः प्रीत्युज्जृम्भितलोचनः
01160172 महाधनानि वासांसि ददौ हारान् महामनाः
01160181 सारथ्यपारषदसेवनसख्यदौत्य ।
01160182 वीरासनानुगमनस्तवनप्रणामान्
01160183 स्निग्धेषु पाण्डुषु जगत्प्रणतिं च विष्णोर् ।
01160184 भक्तिं करोति नृपतिश्चरणारविन्दे
01160191 तस्यैवं वर्तमानस्य पूर्वेषां वृत्तिमन्वहम्
01160192 नातिदूरे किलाश्चर्यं यदासीत् तन् निबोध मे
01160201 धर्मः पदैकेन चरन् विच्छायाम् उपलभ्य गाम्
01160202 पृच्छति स्माश्रुवदनां विवत्साम् इव मातरम्
0116021 धर्म उवाच
01160211 कच्चिद्भद्रेऽनामयमात्मनस्ते विच्छायासि म्लायतेषन् मुखेन
01160212 आलक्षये भवतीमन्तराधिं दूरे बन्धुं शोचसि कञ्चनाम्ब
01160221 पादैर्न्यूनं शोचसि मैकपादम् ।आत्मानं वा वृषलैर्भोक्ष्यमाणम्
01160222 आहो सुरादीन् हृतयज्ञभागान् ।प्रजा उत स्विन् मघवत्यवर्षति
01160231 अरक्ष्यमाणाः स्त्रिय उर्वि बालान् शोचस्यथो पुरुषादैरिवार्तान्
01160232 वाचं देवीं ब्रह्मकुले कुकर्मण्यब्रह्मण्ये राजकुले कुलाग्र्यान्
01160241 किं क्षत्रबन्धून् कलिनोपसृष्टान् राष्ट्राणि वा तैरवरोपितानि
01160242 इतस्ततो वाशनपानवासः स्नानव्यवायोन्मुखजीवलोकम्
01160251 यद्वाम्ब ते भूरिभरावतार कृतावतारस्य हरेर्धरित्रि
01160252 अन्तर्हितस्य स्मरती विसृष्टा कर्माणि निर्वाणविलम्बितानि
01160261 इदं ममाचक्ष्व तवाधिमूलं ।वसुन्धरे येन विकर्शितासि
01160262 कालेन वा ते बलिनां बलीयसा ।सुरार्चितं किं हृतमम्ब सौभगम्
0116027 धरण्युवाच
01160271 भवान् हि वेद तत् सर्वं यन् मां धर्मानुपृच्छसि
01160272 चतुर्भिर्वर्तसे येन पादैर्लोकसुखावहैः
01160281 सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोष आर्जवम्
01160282 शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम्
01160291 ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः
01160292 स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मार्दवम् एव च
01160301 प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः

01160302 गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहङ्कृतिः
01160311 एते चान्ये च भगवन् नित्या यत्र महागुणाः
01160312 प्रार्थ्या महत्त्वम् इच्छद्भिर्न वियन्ति स्म कर्हिचित्
01160321 तेनाहं गुणपात्रेण श्रीनिवासेन साम्प्रतम्
01160322 शोचामि रहितं लोकं पाप्मना कलिनेक्षितम्
01160331 आत्मानं चानुशोचामि भवन्तं चामरोत्तमम्
01160332 देवान् पितृ-न् ऋषीन् साधून् सर्वान् वर्णांस्तथाश्रमान्
01160341 ब्रह्मादयो बहुतिथं यदपाङ्गमोक्ष
01160342 कामास्तपः समचरन् भगवत्प्रपन्नाः
01160343 सा श्रीः स्ववासमरविन्दवनं विहाय
01160344 यत्पादसौभगमलं भजतेऽनुरक्ता
01160351 तस्याहमब्जकुलिशाङ्कुशकेतुकेतैः
01160352 श्रीमत्पदैर्भगवतः समलङ्कृताङ्गी
01160353 त्रीन् अत्यरोच उपलभ्य ततो विभूतिं
01160354 लोकान् स मां व्यसृजदुत्स्मयतीं तदन्ते
01160361 यो वै ममातिभरमासुरवंशराज्ञाम्
01160362 अक्षौहिणीशतमपानुददात्मतन्त्रः
01160363 त्वां दुःस्थम् ऊनपदमात्मनि पौरुषेण
01160364 सम्पादयन् यदुषु रम्यमबिभ्रदङ्गम्
01160371 का वा सहेत विरहं पुरुषोत्तमस्य
01160372 प्रेमावलोकरुचिरस्मितवल्गुजल्पैः
01160373 स्थैर्यं समानमहरन् मधुमानिनीनां
01160374 रोमोत्सवो मम यदङ्घ्रिविटङ्कितायाः
01160381 तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा
01160382 परीक्षिन् नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम्

# Chapter 17

0117001 सूत उवाच
01170011 तत्र गोमिथुनं राजा हन्यमानमनाथवत्
01170012 दण्डहस्तं च वृषलं ददृशे नृपलाञ्छनम्
01170021 वृषं मृणालधवलं मेहन्तम् इव बिभ्यतम्
01170022 वेपमानं पदैकेन सीदन्तं शूद्रताडितम्
01170031 गां च धर्मदुघां दीनां भृशं शूद्रपदाहताम्
01170032 विवत्सामाश्रुवदनां क्षामां यवसम् इच्छतीम्
01170041 पप्रच्छ रथमारूढः कार्तस्वरपरिच्छदम्
01170042 मेघगम्भीरया वाचा समारोपितकार्मुकः
01170051 कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान् बली
01170052 नरदेवोऽसि वेषेण नटवत् कर्मणाद्विजः
01170061 यस्त्वं कृष्णे गते दूरं सहगाण्डीवधन्वना
01170062 शोच्योऽस्यशोच्यान् रहसि प्रहरन् वधमर्हसि
01170071 त्वं वा मृणालधवलः पादैर्न्यूनः पदा चरन्
01170072 वृषरूपेण किं कश्चिद्देवो नः परिखेदयन्
01170081 न जातु कौरवेन्द्राणां दोर्दण्डपरिरम्भिते
01170082 भूतलेऽनुपतन्त्यस्मिन् विना ते प्राणिनां शुचः
01170091 मा सौरभेयात्र शुचो व्येतु ते वृषलाद्भयम्
01170092 मा रोदीरम्ब भद्रं ते खलानां मयि शास्तरि
01170101 यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यन्ते साध्व्यसाधुभिः
01170102 तस्य मत्तस्य नश्यन्ति कीर्तिरायुर्भगो गतिः
01170111 एष राज्ञां परो धर्मो ह्यार्तानामार्तिनिग्रहः
01170112 अत एनं वधिष्यामि भूतद्रुहमसत्तमम्
01170121 कोऽवृश्चत् तव पादांस्त्रीन् सौरभेय चतुष्पद
01170122 मा भूवंस्त्वादृशा राष्ट्रे राज्ञां कृष्णानुवर्तिनाम्
01170131 आख्याहि वृष भद्रं वः साधूनामकृतागसाम्
01170132 आत्मवैरूप्यकर्तारं पार्थानां कीर्तिदूषणम्
01170141 जनेऽनागस्यघं युञ्जन् सर्वतोऽस्य च मद्भयम्

01170142 साधूनां भद्रम् एव स्यादसाधुदमने कृते
01170151 अनागःस्विह भूतेषु य आगस्कृन् निरङ्कुशः
01170152 आहर्तास्मि भुजं साक्षादमर्त्यस्यापि साङ्गदम्
01170161 राज्ञो हि परमो धर्मः स्वधर्मस्थानुपालनम्
01170162 शासतोऽन्यान् यथाशास्त्रमनापद्युत्पथान् इह
0117017 धर्म उवाच
01170171 एतद्वः पाण्डवेयानां युक्तमार्ताभयं वचः
01170172 येषां गुणगणैः कृष्णो दौत्यादौ भगवान् कृतः
01170181 न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ
01170182 पुरुषं तं विजानीमो वाक्यभेदविमोहिताः
01170191 केचिद्विकल्पवसना आहुरात्मानमात्मनः
01170192 दैवमन्येऽपरे कर्म स्वभावमपरे प्रभुम्
01170201 अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः
01170202 अत्रानुरूपं राजर्षे विमृश स्वमनीषया
0117021 सूत उवाच
01170211 एवं धर्मे प्रवदति स सम्राड्द्विजसत्तमाः
01170212 समाहितेन मनसा विखेदः पर्यचष्ट तम्
0117022 राजोवाच
01170221 धर्मं ब्रवीषि धर्मज्ञ धर्मोऽसि वृषरूपधृक्
01170222 यदधर्मकृतः स्थानं सूचकस्यापि तद्भवेत्
01170231 अथवा देवमायाया नूनं गतिरगोचरा
01170232 चेतसो वचसश्चापि भूतानाम् इति निश्चयः
01170241 तपः शौचं दया सत्यम् इति पादाः कृते कृताः
01170242 अधर्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव
01170251 इदानीं धर्म पादस्ते सत्यं निर्वर्तयेद्यतः
01170252 तं जिघृक्षत्यधर्मोऽयमनृतेनैधितः कलिः
01170261 इयं च भूमिर्भगवता न्यासितोरुभरा सती
01170262 श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतुका
01170271 शोचत्यश्रुकला साध्वी दुर्भगेवोज्झिता सती
01170272 अब्रह्मण्या नृपव्याजाः शूद्रा भोक्ष्यन्ति माम् इति
01170281 इति धर्मं महीं चैव सान्त्वयित्वा महारथः
01170282 निशातमाददे खड्गं कलयेऽधर्महेतवे
01170291 तं जिघांसुमभिप्रेत्य विहाय नृपलाञ्छनम्
01170292 तत्पादमूलं शिरसा समगाद्भयविह्वलः
01170301 पतितं पादयोर्वीरः कृपया दीनवत्सलः
01170302 शरण्यो नावधीच् छ्लोक्य आह चेदं हसन्न् इव
0117031 राजोवाच
01170311 न ते गुडाकेशयशोधराणां बद्धाञ्जलेर्वै भयमस्ति किञ्चित्
01170312 न वर्तितव्यं भवता कथञ्चन क्षेत्रे मदीये त्वमधर्मबन्धुः

01170321 त्वां वर्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः
01170322 लोभोऽनृतं चौर्यमनार्यमंहो ज्येष्ठा च माया कलहश्च दम्भः
01170331 न वर्तितव्यं तदधर्मबन्धो धर्मेण सत्येन च वर्तितव्ये
01170332 ब्रह्मावर्ते यत्र यजन्ति यज्ञैर्यज्ञेश्वरं यज्ञवितानविज्ञाः
01170341 यस्मिन् हरिर्भगवान् इज्यमान इज्यात्ममूर्तिर्यजतां शं तनोति
01170342 कामान् अमोघान् स्थिरजङ्गमानामन्तर्बहिर्वायुरिवैष आत्मा
0117035 सूत उवाच
01170351 परीक्षितैवमादिष्टः स कलिर्जातवेपथुः
01170352 तम् उद्यतासिमाहेदं दण्डपाणिम् इवोद्यतम्
0117036 कलिरुवाच
01170361 यत्र क्व वाथ वत्स्यामि सार्वभौम तवाज्ञया
01170362 लक्षये तत्र तत्रापि त्वामात्तेषुशरासनम्
01170371 तन् मे धर्मभृतां श्रेष्ठ स्थानं निर्देष्टुमर्हसि
01170372 यत्रैव नियतो वत्स्य आतिष्ठंस्तेऽनुशासनम्
0117038 सूत उवाच
01170381 अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ
01170382 द्यूतं पानं स्त्रियः सूना यत्राधर्मश्चतुर्विधः
01170391 पुनश्च याचमानाय जातरूपमदात् प्रभुः
01170392 ततोऽनृतं मदं कामं रजो वैरं च पञ्चमम्
01170401 अमूनि पञ्च स्थानानि ह्यधर्मप्रभवः कलिः
01170402 औत्तरेयेण दत्तानि न्यवसत् तन्निदेशकृत्
01170411 अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित्
01170412 विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः
01170421 वृषस्य नष्टांस्त्रीन् पादान् तपः शौचं दयाम् इति
01170422 प्रतिसन्दध आश्वास्य महीं च समवर्धयत्
01170431 स एष एतर्ह्यध्यास्त आसनं पार्थिवोचितम्
01170432 पितामहेनोपन्यस्तं राज्ञारण्यं विविक्षता
01170441 आस्तेऽधुना स राजर्षिः कौरवेन्द्रश्रियोल्लसन्
01170442 गजाह्वये महाभागश्चक्रवर्ती बृहच्छ्रवाः
01170451 इत्थम्भूतानुभावोऽयमभिमन्युसुतो नृपः
01170452 यस्य पालयतः क्षौणीं यूयं सत्राय दीक्षिताः

# Chapter 18

0118001 सूत उवाच
01180011 यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः
01180012 अनुग्रहाद्भगवतः कृष्णस्याद्भुतकर्मणः
01180021 ब्रह्मकोपोत्थिताद्यस्तु तक्षकात् प्राणविप्लवात्
01180022 न सम्मुमोहोरुभयाद्भगवत्यर्पिताशयः
01180031 उत्सृज्य सर्वतः सङ्गं विज्ञाताजितसंस्थितिः
01180032 वैयासकेर्जहौ शिष्यो गङ्गायां स्वं कलेवरम्
01180041 नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम्
01180042 स्यात् सम्भ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम्
01180051 तावत् कलिर्न प्रभवेत् प्रविष्टोऽपीह सर्वतः
01180052 यावदीशो महान् उर्व्यामाभिमन्यव एकराट्
01180061 यस्मिन्न् अहनि यर्ह्येव भगवान् उत्ससर्ज गाम्
01180062 तदैवेहानुवृत्तोऽसावधर्मप्रभवः कलिः
01180071 नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक्
01180072 कुशलान्याशु सिद्ध्यन्ति नेतराणि कृतानि यत्
01180081 किं नु बालेषु शूरेण कलिना धीरभीरुणा
01180082 अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्तते
01180091 उपवर्णितम् एतद्वः पुण्यं पारीक्षितं मया
01180092 वासुदेवकथोपेतमाख्यानं यदपृच्छत
01180101 या याः कथा भगवतः कथनीयोरुकर्मणः
01180102 गुणकर्माश्रयाः पुम्भिः संसेव्यास्ता बुभूषुभिः
0118011 ऋषय ऊचुः
01180111 सूत जीव समाः सौम्य शाश्वतीर्विशदं यशः
01180112 यस्त्वं शंससि कृष्णस्य मर्त्यानाममृतं हि नः
01180121 कर्मण्यस्मिन्न् अनाश्वासे धूमधूम्रात्मनां भवान्
01180122 आपाययति गोविन्द पादपद्मासवं मधु
01180131 तुलयाम लवेनापि न स्वर्गं नापुनर्भवम्
01180132 भगवत्सङ्गिसङ्गस्य मर्त्यानां किम् उताशिषः

01180141 को नाम तृप्येद्रसवित् कथायां ।महत्तमैकान्तपरायणस्य
01180142 नान्तं गुणानामगुणस्य जग्मुर् ।योगेश्वरा ये भवपाद्ममुख्याः
01180151 तन् नो भवान् वै भगवत्प्रधानो ।महत्तमैकान्तपरायणस्य
01180152 हरेरुदारं चरितं विशुद्धं ।शुश्रूषतां नो वितनोतु विद्वन्
01180161 स वै महाभागवतः परीक्षिद् ।येनापवर्गाख्यमदभ्रबुद्धिः
01180162 ज्ञानेन वैयासकिशब्दितेन ।भेजे खगेन्द्रध्वजपादमूलम्
01180171 तन् नः परं पुण्यमसंवृतार्थम् ।आख्यानमत्यद्भुतयोगनिष्ठम्
01180172 आख्याह्यनन्ताचरितोपपन्नं ।पारीक्षितं भागवताभिरामम्
0118018 सूत उवाच
01180181 अहो वयं जन्मभृतोऽद्य हास्म ।वृद्धानुवृत्त्यापि विलोमजाताः
01180182 दौष्कुल्यमाधिं विधुनोति शीघ्रं ।महत्तमानामभिधानयोगः
01180191 कुतः पुनर्गृणतो नाम तस्य ।महत्तमैकान्तपरायणस्य
01180192 योऽनन्तशक्तिर्भगवान् अनन्तो ।महद्गुणत्वाद्यमनन्तमाहुः
01180201 एतावतालं ननु सूचितेन ।गुणैरसाम्यानतिशायनस्य
01180202 हित्वेतरान् प्रार्थयतो विभूतिर् ।यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः
01180211 अथापि यत्पादनखावसृष्टं ।जगद्विरिञ्चोपहृतार्हणाम्भः
01180212 सेशं पुनात्यन्यतमो मुकुन्दात् ।को नाम लोके भगवत्पदार्थः
01180221 यत्रानुरक्ताः सहसैव धीरा ।व्यपोह्य देहादिषु सङ्गम् ऊढम्
01180222 व्रजन्ति तत् पारमहंस्यमन्त्यं ।यस्मिन्न् अहिंसोपशमः स्वधर्मः
01180231 अहं हि पृष्टोऽर्यमणो भवद्भिर् ।आचक्ष आत्मावगमोऽत्र यावान्
01180232 नभः पतन्त्यात्मसमं पतत्त्रिणस् ।तथा समं विष्णुगतिं विपश्चितः
01180241 एकदा धनुरुद्यम्य विचरन् मृगयां वने
01180242 मृगान् अनुगतः श्रान्तः क्षुधितस्तृषितो भृशम्
01180251 जलाशयमचक्षाणः प्रविवेश तमाश्रमम्
01180252 ददर्श मुनिमासीनं शान्तं मीलितलोचनम्
01180261 प्रतिरुद्धेन्द्रियप्राण मनोबुद्धिम् उपारतम्
01180262 स्थानत्रयात् परं प्राप्तं ब्रह्मभूतमविक्रियम्
01180271 विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च
01180272 विशुष्यत्तालुरुदकं तथाभूतमयाचत
01180281 अलब्धतृणभूम्यादिरसम्प्राप्तार्घ्यसूनृतः
01180282 अवज्ञातम् इवात्मानं मन्यमानश्चुकोप ह
01180291 अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः
01180292 ब्राह्मणं प्रत्यभूद्ब्रह्मन् मत्सरो मन्युरेव च
01180301 स तु ब्रह्मऋषेरंसे गतासुम् उरगं रुषा
01180302 विनिर्गच्छन् धनुष्कोट्या निधाय पुरमागतः
01180311 एष किं निभृताशेष करणो मीलितेक्षणः
01180312 मृषासमाधिराहोस्वित् किं नु स्यात् क्षत्रबन्धुभिः
01180321 तस्य पुत्रोऽतितेजस्वी विहरन् बालकोऽर्भकैः
01180322 राज्ञाघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत्

01180331 अहो अधर्मः पालानां पीव्नां बलिभुजाम् इव
01180332 स्वामिन्यघं यद्दासानां द्वारपानां शुनाम् इव
01180341 ब्राह्मणैः क्षत्रबन्धुर्हि गृहपालो निरूपितः
01180342 स कथं तद्गृहे द्वाःस्थः सभाण्डं भोक्तुमर्हति
01180351 कृष्णे गते भगवति शास्तर्युत्पथगामिनाम्
01180352 तद्भिन्नसेतून् अद्याहं शास्मि पश्यत मे बलम्
01180361 इत्युक्त्वा रोषताम्राक्षो वयस्यान् ऋषिबालकः
01180362 कौशिक्याप उपस्पृश्य वाग्वज्रं विससर्ज ह
01180371 इति लङ्घितमर्यादं तक्षकः सप्तमेऽहनि
01180372 दङ्क्ष्यति स्म कुलाङ्गारं चोदितो मे ततद्रुहम्
01180381 ततोऽभ्येत्याश्रमं बालो गले सर्पकलेवरम्
01180382 पितरं वीक्ष्य दुःखार्तो मुक्तकण्ठो रुरोद ह
01180391 स वा आङ्गिरसो ब्रह्मन् श्रुत्वा सुतविलापनम्
01180392 उन्मील्य शनकैर्नेत्रे दृष्ट्वा चांसे मृतोरगम्
01180401 विसृज्य तं च पप्रच्छ वत्स कस्माद्धि रोदिषि
01180402 केन वा तेऽपकृतम् इत्युक्तः स न्यवेदयत्
01180411 निशम्य शप्तमतदर्हं नरेन्द्रं स ब्राह्मणो नात्मजमभ्यनन्दत्
01180412 अहो बतांहो महदद्य ते कृतमल्पीयसि द्रोह उरुर्दमो धृतः
01180421 न वै नृभिर्नरदेवं पराख्यं सम्मातुमर्हस्यविपक्वबुद्धे
01180422 यत्तेजसा दुर्विषहेण गुप्ता विन्दन्ति भद्राण्यकुतोभयाः प्रजाः
01180431 अलक्ष्यमाणे नरदेवनाम्नि रथाङ्गपाणावयमङ्ग लोकः
01180432 तदा हि चौरप्रचुरो विनङ्क्ष्यत्यरक्ष्यमाणोऽविवरूथवत् क्षणात्
01180441 तदद्य नः पापम् उपैत्यनन्वयं यन् नष्टनाथस्य वसोर्विलुम्पकात्
01180442 परस्परं घ्नन्ति शपन्ति वृञ्जते पशून् स्त्रियोऽर्थान् पुरुदस्यवो जनाः
01180451 तदार्यधर्मः प्रविलीयते नृणां वर्णाश्रमाचारयुतस्त्रयीमयः
01180452 ततोऽर्थकामाभिनिवेशितात्मनां शुनां कपीनाम् इव वर्णसङ्करः
01180461 धर्मपालो नरपतिः स तु सम्राड्बृहच्छ्रवाः
01180462 साक्षान् महाभागवतो राजर्षिर्हयमेधयाट्
01180463 क्षुत्तृट्श्रमयुतो दीनो नैवास्मच् छापमर्हति
01180471 अपापेषु स्वभृत्येषु बालेनापक्वबुद्धिना
01180472 पापं कृतं तद्भगवान् सर्वात्मा क्षन्तुमर्हति
01180481 तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि
01180482 नास्य तत् प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि हि
01180491 इति पुत्रकृताघेन सोऽनुतप्तो महामुनिः
01180492 स्वयं विप्रकृतो राज्ञा नैवाघं तदचिन्तयत्
01180501 प्रायशः साधवो लोके परैर्द्वन्द्वेषु योजिताः
01180502 न व्यथन्ति न हृष्यन्ति यत आत्मागुणाश्रयः

# Chapter 19

0119001 सूत उवाच
01190011 महीपतिस्त्वथ तत्कर्म गर्ह्यं । विचिन्तयन्न् आत्मकृतं सुदुर्मनाः
01190012 अहो मया नीचमनार्यवत् कृतं । निरागसि ब्रह्मणि गूढतेजसि
01190021 ध्रुवं ततो मे कृतदेवहेलनाद् । दुरत्ययं व्यसनं नातिदीर्घात्
01190022 तदस्तु कामं ह्यघनिष्कृताय मे । यथा न कुर्यां पुनरेवमद्धा
01190031 अद्यैव राज्यं बलम् ऋद्धकोशं । प्रकोपितब्रह्मकुलानलो मे
01190032 दहत्वभद्रस्य पुनर्न मेऽभूत् । पापीयसी धीर्द्विजदेवगोभ्यः
01190041 स चिन्तयन्न् इत्थमथाशृणोद्यथा । मुनेः सुतोक्तो निर्ऋतिस्तक्षकाख्यः
01190042 स साधु मेने न चिरेण तक्षका । नलं प्रसक्तस्य विरक्तिकारणम्
01190051 अथो विहायेममम़ुं च लोकं । विमर्शितौ हेयतया पुरस्तात्
01190052 कृष्णाङ्घ्रिसेवामधिमन्यमान । उपाविशत् प्रायममर्त्यनद्याम्
01190061 या वै लसच्छ्रीतुलसीविमिश्र । कृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री
01190062 पुनाति लोकान् उभयत्र सेशान् । कस्तां न सेवेत मरिष्यमाणः
01190071 इति व्यवच्छिद्य स पाण्डवेयः । प्रायोपवेशं प्रति विष्णुपद्याम्
01190072 दधौ मुकुन्दाङ्घ्रिमनन्यभावो । मुनिव्रतो मुक्तसमस्तसङ्गः
01190081 तत्रोपजग्मुर्भुवनं पुनाना । महानुभावा मुनयः सशिष्याः
01190082 प्रायेण तीर्थाभिगमापदेशैः । स्वयं हि तीर्थानि पुनन्ति सन्तः
01190091 अत्रिर्वसिष्ठश्च्यवनः शरद्वान् । अरिष्टनेमिर्भृगुरङ्गिराश्च
01190092 पराशरो गाधिसुतोऽथ राम । उतथ्य इन्द्रप्रमदेध्मवाहौ
01190101 मेधातिथिर्देवल आर्ष्टिषेणो । भारद्वाजो गौतमः पिप्पलादः
01190102 मैत्रेय और्वः कवषः कुम्भयोनिर् । द्वैपायनो भगवान् नारदश्च
01190111 अन्ये च देवर्षिब्रह्मर्षिवर्या । राजर्षिवर्या अरुणादयश्च
01190112 नानार्षेयप्रवरान् समेतान् । अभ्यर्च्य राजा शिरसा ववन्दे
01190121 सुखोपविष्टेष्वथ तेषु भूयः । कृतप्रणामः स्वचिकीर्षितं यत्
01190122 विज्ञापयामास विविक्तचेता । उपस्थितोऽग्रेऽभिगृहीतपाणिः
0119013 राजोवाच
01190131 अहो वयं धन्यतमा नृपाणां । महत्तमानुग्रहणीयशीलाः
01190132 राज्ञां कुलं ब्राह्मणपादशौचाद् । दूराद्विसृष्टं बत गर्ह्यकर्म

01190141 तस्यैव मेऽघस्य परावरेशो ।व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम्
01190142 निर्वेदमूलो द्विजशापरूपो ।यत्र प्रसक्तो भयमाशु धत्ते
01190151 तं मोपयातं प्रतियन्तु विप्रा ।गङ्गा च देवी धृतचित्तम् ईशे
01190152 द्विजोपसृष्टः कुहकस्तक्षको वा ।दशत्वलं गायत विष्णुगाथाः
01190161 पुनश्च भूयाद्भगवत्यनन्ते ।रतिः प्रसङ्गश्च तदाश्रयेषु
01190162 महत्सु यां याम् उपयामि सृष्टिं ।मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः
01190171 इति स्म राजाध्यवसाययुक्तः ।प्राचीनमूलेषु कुशेषु धीरः
01190172 उदङ्मुखो दक्षिणकूल आस्ते ।समुद्रपत्न्याः स्वसुतन्यस्तभारः
01190181 एवं च तस्मिन् नरदेवदेवे ।प्रायोपविष्टे दिवि देवसङ्घाः
01190182 प्रशस्य भूमौ व्यकिरन् प्रसूनैर् ।मुदा मुहुर्दुन्दुभयश्च नेदुः
01190191 महर्षयो वै समुपागता ये ।प्रशस्य साध्वित्यनुमोदमानाः
01190192 ऊचुः प्रजानुग्रहशीलसारा ।यदुत्तमश्लोकगुणाभिरूपम्
01190201 न वा इदं राजर्षिवर्य चित्रं ।भवत्सु कृष्णं समनुव्रतेषु
01190202 येऽध्यासनं राजकिरीटजुष्टं ।सद्यो जहुर्भगवत्पार्श्वकामाः
01190211 सर्वे वयं तावदिहास्महेऽथ ।कलेवरं यावदसौ विहाय
01190212 लोकं परं विरजस्कं विशोकं ।यास्यत्ययं भागवतप्रधानः
01190221 आश्रुत्य तदृषिगणवचः परीक्षित् ।समं मधुच्युद्गुरु चाव्यलीकम्
01190222 आभाषतैनान् अभिनन्द्य युक्तान् ।शुश्रूषमाणश्चरितानि विष्णोः
01190231 समागताः सर्वत एव सर्वे ।वेदा यथा मूर्तिधरास्त्रिपृष्ठे
01190232 नेहाथ नामुत्र च कश्चनार्थ ।ऋते परानुग्रहमात्मशीलम्
01190241 ततश्च वः पृच्छ्यम् इमं विपृच्छे ।विश्रभ्य विप्रा इति कृत्यतायाम्
01190242 सर्वात्मना म्रियमाणैश्च कृत्यं ।शुद्धं च तत्रामृशताभियुक्ताः
01190251 तत्राभवद्भगवान् व्यासपुत्रो ।यदृच्छया गामटमानोऽनपेक्षः
01190252 अलक्ष्यलिङ्गो निजलाभतुष्टो ।वृतश्च बालैरवधूतवेषः
01190261 तं द्व्यष्टवर्षं सुकुमारपाद ।करोरुबाह्वंसकपोलगात्रम्
01190262 चार्वायताक्षोन्नसतुल्यकर्ण ।सुभ्र्वाननं कम्बुसुजातकण्ठम्
01190271 निगूढजत्रुं पृथुतुङ्गवक्षसम् ।आवर्तनाभिं वलिवल्गूदरं च
01190272 दिगम्बरं वक्त्रविकीर्णकेशं ।प्रलम्बबाहुं स्वमरोत्तमाभम्
01190281 श्यामं सदापीव्यवयो'ङ्गलक्ष्म्या ।स्त्रीणां मनोज्ञं रुचिरस्मितेन
01190282 प्रत्युत्थितास्ते मुनयः स्वासनेभ्यस् ।तल्लक्षणज्ञा अपि गूढवर्चसम्
01190291 स विष्णुरातोऽतिथय आगताय ।तस्मै सपर्यां शिरसाजहार
01190292 ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भका ।महासने सोपविवेश पूजितः
01190301 स संवृतस्तत्र महान् महीयसां ।ब्रह्मर्षिराजर्षिदेवर्षिसङ्घैः
01190302 व्यरोचतालं भगवान् यथेन्दुर् ।ग्रहर्क्षतारानिकरैः परीतः
01190311 प्रशान्तमासीनमकुण्ठमेधसं ।मुनिं नृपो भागवतोऽभ्युपेत्य
01190312 प्रणम्य मूर्ध्नावहितः कृताञ्जलिर् ।नत्वा गिरा सूनृतयान्वपृच्छत्
0119032 परीक्षिदुवाच
01190321 अहो अद्य वयं ब्रह्मन् सत्सेव्याः क्षत्रबन्धवः
01190322 कृपयातिथिरूपेण भवद्भिस्तीर्थकाः कृताः

01190331 येषां संस्मरणात् पुंसां सद्यः शुद्ध्यन्ति वै गृहाः
01190332 किं पुनर्दर्शनस्पर्श पादशौचासनादिभिः
01190341 सान्निध्यात् ते महायोगिन् पातकानि महान्त्यपि
01190342 सद्यो नश्यन्ति वै पुंसां विष्णोरिव सुरेतराः
01190351 अपि मे भगवान् प्रीतः कृष्णः पाण्डुसुतप्रियः
01190352 पैतृष्वसेयप्रीत्यर्थं तद्गोत्रस्यात्तबान्धवः
01190361 अन्यथा तेऽव्यक्तगतेर्दर्शनं नः कथं नृणाम्
01190362 नितरां म्रियमाणानां संसिद्धस्य वनीयसः
01190371 अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम्
01190372 पुरुषस्येह यत् कार्यं म्रियमाणस्य सर्वथा
01190381 यच् छ्रोतव्यमथो जप्यं यत् कर्तव्यं नृभिः प्रभो
01190382 स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययम्
01190391 नूनं भगवतो ब्रह्मन् गृहेषु गृहमेधिनाम्
01190392 न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित्
0119040 सूत उवाच
01190401 एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा
01190402 प्रत्यभाषत धर्मज्ञो भगवान् बादरायणिः

# Chapter 1

0201001 श्री-शुक उवाच
02010011 वरीयानेष ते प्रश्नः कृतो लोक-हितं नृप
02010012 आत्मवित्-सम्मतः पुंसां श्रोतव्यादिषु यः परः
02010021 श्रोतव्यादीनि राजेन्द्र नृणां सन्ति सहस्रशः
02010022 अपश्यताम् आत्म-तत्त्वं गृहेषु गृह-मेधिनाम्
02010031 निद्रया ह्रियते नक्तं व्यवायेन च वा वयः
02010032 दिवा चार्थेहया राजन् कुटुम्ब-भरणेन वा
02010041 देहापत्य-कलत्रादिष्वात्म-सैन्येष्वसत्स्वपि
02010042 तेषां प्रमत्तो निधनं पश्यन्नपि न पश्यति
02010051 तस्माद्भारत सर्वात्मा भगवानीश्वरो हरिः
02010052 श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयम्
02010061 एतावान्साङ्ख्य-योगाभ्यां स्व-धर्म-परिनिष्ठया
02010062 जन्म-लाभः परः पुंसाम् अन्ते नारायण-स्मृतिः
02010071 प्रायेण मुनयो राजन् निवृत्ता विधि-षेधतः
02010072 नैर्गुण्य-स्था रमन्ते स्म गुणानुकथने हरेः
02010081 इदं भागवतं नाम पुराणं ब्रह्म-सम्मितम्
02010082 अधीतवान् द्वापरादौ पितुर्द्वैपायनादहम्
02010091 परिनिष्ठितोऽपि नैर्गुण्य उत्तम-श्लोक-लीलया
02010092 गृहीत-चेता राजर्षे आख्यानं यदधीतवान्
02010101 तदहं तेऽभिधास्यामि महा-पौरुषिको भवान्
02010102 यस्य श्रद्दधताम् आशु स्यान् मुकुन्दे मतिः सती
02010111 एतन् निर्विद्यमानानाम् इच्छताम् अकुतो-भयम्
02010112 योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम्
02010121 किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह
02010122 वरं मुहूर्तं विदितं घटते श्रेयसे यतः
02010131 खट्वाङ्गो नाम राजर्षिर्ज्ञात्वेयत्ताम् इहायुषः
02010132 मुहूर्तात् सर्वम् उत्सृज्य गतवान् अभयं हरिम्
02010141 तवाप्येतर्हि कौरव्य सप्ताहं जीवितावधिः

02010142 उपकल्पय तत् सर्वं तावद्यत् साम्परायिकम्
02010151 अन्त-काले तु पुरुष आगते गत-साध्वसः
02010152 छिन्द्यादसङ्ग-शस्त्रेण स्पृहां देहेऽनु ये च तम्
02010161 गृहात् प्रव्रजितो धीरः पुण्य-तीर्थ-जलाप्लुतः
02010162 शुचौ विविक्त आसीनो विधिवत् कल्पितासने
02010171 अभ्यसेन् मनसा शुद्धं त्रिवृद्-ब्रह्माक्षरं परम्
02010172 मनो यच्छेज् जित-श्वासो ब्रह्म-बीजम् अविस्मरन्
02010181 नियच्छेद्विषयेभ्योऽक्षान् मनसा बुद्धि-सारथिः
02010182 मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया
02010191 तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा
02010192 मनो निर्विषयं युक्त्वा ततः किञ्चन न स्मरेत्
02010193 पदं तत् परमं विष्णोर्मनो यत्र प्रसीदति
02010201 रजस्-तमोभ्याम् आक्षिप्तं विमूढं मन आत्मनः
02010202 यच्छेद्धारणया धीरो हन्ति या तत्-कृतं मलम्
02010211 यस्यां सन्धार्यमाणायां योगिनो भक्ति-लक्षणः
02010212 आशु सम्पद्यते योग आश्रयं भद्रम् ईक्षतः
0201022 राजोवाच
02010221 यथा सन्धार्यते ब्रह्मन् धारणा यत्र सम्मता
02010222 यादृशी वा हरेदाशु पुरुषस्य मनो-मलम्
0201023 श्री-शुक उवाच
02010231 जितासनो जित-श्वासो जित-सङ्गो जितेन्द्रियः
02010232 स्थूले भगवतो रूपे मनः सन्धारयेद्धिया
02010241 विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम्
02010242 यत्रेदं व्यज्यते विश्वं भूतं भव्यं भवच् च सत्
02010251 अण्ड-कोशे शरीरेऽस्मिन् सप्तावरण-संयुते
02010252 वैराजः पुरुषो योऽसौ भगवान् धारणाश्रयः
02010261 पातालम् एतस्य हि पाद-मूलं ।पठन्ति पार्ष्णि-प्रपदे रसातलम्
02010262 महातलं विश्व-सृजोऽथ गुल्फौ ।तलातलं वै पुरुषस्य जङ्घे
02010271 द्वे जानुनी सुतलं विश्व-मूर्तेर् ।ऊरु-द्वयं वितलं चातलं च
02010272 महीतलं तज्-जघनं महीपते ।नभस्तलं नाभि-सरो गृणन्ति
02010281 उरः-स्थलं ज्योतिर्-अनीकम् अस्य ।ग्रीवा महर्वदनं वै जनोऽस्य
02010282 तपो वराटीं विदुरादि-पुंसः ।सत्यं तु शीर्षाणि सहस्र-शीर्ष्णः
02010291 इन्द्रादयो बाहव आहुरुस्राः ।कर्णौ दिशः श्रोत्रम् अमुष्य शब्दः
02010292 नासत्य-दस्रौ परमस्य नासे ।घ्राणोऽस्य गन्धो मुखम् अग्निरिद्धः
02010301 द्यौरक्षिणी चक्षुरभूत् पतङ्गः ।पक्ष्माणि विष्णोरहनी उभे च
02010302 तद्-भ्रू-विजृम्भः परमेष्ठि-धिष्ण्यम् ।आपोऽस्य तालू रस एव जिह्वा
02010311 छन्दांस्यनन्तस्य शिरो गृणन्ति ।दंष्ट्रा यमः स्नेह-कला द्विजानि
02010312 हासो जनोन्माद-करी च माया ।दुरन्त-सर्गो यद्-अपाङ्ग-मोक्षः
02010321 व्रीडोत्तरौष्ठोऽधर एव लोभो धर्मः स्तनोऽधर्म-पथोऽस्य पृष्ठम्
02010322 कस्तस्य मेढ्रं वृषणौ च मित्रौ कुक्षिः समुद्रा गिरयोऽस्थि-सङ्घाः

02010331 नाड्योऽस्य नद्योऽथ तनू-रुहाणि ।मही-रुहा विश्व-तनोर्नृपेन्द्र
02010332 अनन्त-वीर्यः श्वसितं मातरिश्वा ।गतिर्वयः कर्म गुण-प्रवाहः
02010341 ईशस्य केशान् विदुरम्बुवाहान् ।वासस्तु सन्ध्यां कुरु-वर्य भूम्नः
02010342 अव्यक्तम् आहुर्हृदयं मनश्च ।स चन्द्रमाः सर्व-विकार-कोशः
02010351 विज्ञान-शक्तिं महिम् आमनन्ति ।सर्वात्मनोऽन्तः-करणं गिरित्रम्
02010352 अश्वाश्वतर्य्-उष्ट्र-गजा नखानि ।सर्वे मृगाः पशवः श्रोणि-देशे
02010361 वयांसि तद्-व्याकरणं विचित्रं ।मनुर्मनीषा मनुजो निवासः
02010362 गन्धर्व-विद्याधर-चारणाप्सरः ।स्वर-स्मृतीरसुरानीक-वीर्यः
02010371 ब्रह्माननं क्षत्र-भुजो महात्मा ।विड्ूरुरङ्घ्रि-श्रित-कृष्ण-वर्णः
02010372 नानाभिधाभीज्य-गणोपपन्नो ।द्रव्यात्मकः कर्म वितान-योगः
02010381 इयान् असावीश्वर-विग्रहस्य ।यः सन्निवेशः कथितो मया ते
02010382 सन्धार्यतेऽस्मिन् वपुषि स्थविष्ठे ।मनः स्व-बुद्ध्या न यतोऽस्ति किञ्चित्
02010391 स सर्व-धी-वृत्त्य्-अनुभूत-सर्व ।आत्मा यथा स्वप्न-जनेक्षितैकः
02010392 तं सत्यम् आनन्द-निधिं भजेत ।नान्यत्र सज्जेद्यत आत्म-पातः

# Chapter 2

0202001 श्री-शुक उवाच
02020011 एवं पुरा धारणयात्म-योनिर् ।नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात्
02020012 तथा ससर्जेदम् अमोघ-दृष्टिर् ।यथाप्ययात् प्राग् व्यवसाय-बुद्धिः
02020021 शाब्दस्य हि ब्रह्मण एष पन्था ।यन् नामभिर्ध्यायति धीरपार्थैः
02020022 परिभ्रमंस्तत्र न विन्दतेऽर्थान् ।मायामये वासनया शयानः
02020031 अतः कविर्नामसु यावदर्थः ।स्यादप्रमत्तो व्यवसाय-बुद्धिः
02020032 सिद्धेऽन्यथार्थे न यतेत तत्र ।परिश्रमं तत्र समीक्षमाणः
02020041 सत्यां क्षितौ किं कशिपोः प्रयासैर् ।बाहौ स्वसिद्धे ह्युपबर्हणैः किम्
02020042 सत्यञ्जलौ किं पुरुधान्न-पात्र्या ।दिग्-वल्कलादौ सति किं दुकूलैः
02020051 चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
02020052 नैवाङ्घ्रिपाः पर-भृतः सरितोऽप्यशुष्यन्
02020053 रुद्धा गुहाः किम् अजितोऽवति नोपसन्नान्
02020054 कस्माद्भजन्ति कवयो धन-दुर्मदान्धान्
02020061 एवं स्व-चित्ते स्वत एव सिद्ध ।आत्मा प्रियोऽर्थो भगवान् अनन्तः
02020062 तं निर्वृतो नियतार्थो भजेत ।संसार-हेतूपरमश्च यत्र
02020071 कस्तां त्वनादृत्य परानुचिन्ताम् ।ऋते पशून् असतीं नाम कुर्यात्
02020072 पश्य' जनं पतितं वैतरण्यां ।स्व-कर्मजान् परितापा' जुषाणम्
02020081 केचित् स्व-देहान्तर्-हृदयावकाशे ।प्रादेश-मात्रं पुरुषं वसन्तम्
02020082 चतुर्-भुजं कञ्ज-रथाङ्ग-शङ्ख- ।गदा-धरं धारणया स्मरन्ति
02020091 रसन्न-वक्त्रं नलिनायतेक्षणं ।कदम्ब-किञ्जल्क-पिशङ्ग-वाससम्
02020092 लसन्-महा-रत्न-हिरण्मयाङ्गदं ।स्फुरन्-महा-रत्न-किरीट-कुण्डलम्
02020101 उन्निद्र-हृत्-पङ्कज-कर्णिकालये ।योगेश्वरास्थापित-पाद-पल्लवम्
02020102 श्री-लक्षणं कौस्तुभ-रत्न-कन्धरम् ।अम्लान-लक्ष्म्या वन-मालयाचितम्
02020111 विभूषितं मेखलयाङ्गुलीयकैर् ।महा-धनैर्नूपुर-कङ्कणादिभिः
02020112 स्निग्धामलाकुञ्चित-नील-कुन्तलैर् ।विरोचमानानन-हास-पेशलम्
02020121 अदीन-लीला-हसितेक्षणोल्लसद्- ।भ्रू-भङ्ग-संसूचित-भूर्य्-अनुग्रहम्
02020122 ईक्षेत चिन्तामयम् एनम् ईश्वरं ।यावन् मनो धारणयावतिष्ठते
02020131 एकैकशोऽङ्गानि धियानुभावयेत् ।पादादि यावद्धसितं गदाभृतः

02020132 जितं जितं स्थानम् अपोह्य धारयेत् । परं परं शुद्ध्यति धीर्यथा यथा
02020141 यावन् न जायेत परावरेऽस्मिन् । विश्वेश्वरे द्रष्टरि भक्ति-योगः
02020142 तावत् स्थवीयः पुरुषस्य रूपं । क्रियावसाने प्रयतः स्मरेत
02020151 स्थिरं सुखं चासनम् आस्थितो यतिर् । यदा जिहासुरिमम् अङ्ग लोकम्
02020152 काले च देशे च मनो न सज्जयेत् । प्राणान् नियच्छेन् मनसा जितासुः
02020161 मनः स्व-बुद्ध्यामलया नियम्य । क्षेत्र-ज्ञ एतां निनयेत् तम् आत्मनि
02020162 आत्मानम् आत्मन्यवरुध्य धीरो । लब्धोपशान्तिर्विरमेत कृत्यात्
02020171 न यत्र कालोऽनिमिषां परः प्रभुः । कुतो नु देवा जगतां य ईशिरे
02020172 न यत्र सत्त्वं न रजस्तमश्च । न वै विकारो न महान् प्रधानम्
02020181 परं पदं वैष्णवम् आमनन्ति तद् । यन् नेति नेतीत्यतदुत्सिसृक्षवः
02020182 विसृज्य दौरात्म्यम् अनन्य-सौहृदा । हृदोपगुह्यार्ह-पदं पदे पदे
02020191 इत्थं मुनिस्तूपरमेद्व्यवस्थितो । विज्ञान-दृग्-वीर्य-सुरन्धिताशयः
02020192 स्व-पार्ष्णिनापीड्य गुदं ततोऽनिलं । स्थानेषु षट्सून्नमयेज् जित-क्लमः
02020201 नाभ्यां स्थितं हृद्यधिरोप्य तस्माद् । उदान-गत्योरसि तं नयेन् मुनिः
02020202 ततोऽनुसन्धाय धिया मनस्वी । स्व-तालु-मूलं शनकैर्नयेत
02020211 तस्माद्भ्रुवोरन्तरम् उन्नयेत । निरुद्ध-सप्तायतनोऽनपेक्षः
02020212 स्थित्वा मुहूर्तार्धम् अकुण्ठ-दृष्टिर् । निर्भिद्य मूर्धन् विसृजेत् परं गतः
02020221 यदि प्रयास्यन् नृप पारमेष्ठ्यं । वैहायसानाम् उत यद्विहारम्
02020222 अष्टाधिपत्यं गुण-सन्निवाये । सहैव गच्छेन् मनसेन्द्रियैश्च
02020231 योगेश्वराणां गतिम् आहुरन्तर्- । बहिस्-त्रि-लोक्याः पवनान्तर्-आत्मनाम्
02020232 न कर्मभिस्तां गतिम् आप्नुवन्ति । विद्या-तपो-योग-समाधि-भाजाम्
02020241 वैश्वानरं याति विहायसा गतः । सुषुम्णया ब्रह्म-पथेन शोचिषा
02020242 विधूत-कल्कोऽथ हरेरुदस्तात् । प्रयाति चक्रं नृप शैशुमारम्
02020251 तद्विश्व-नाभिं त्वतिवर्त्य विष्णोर् । अणीयसा विरजेनात्मनैकः
02020252 नमस्कृतं ब्रह्म-विदाम् उपैति । कल्पायुषो यद्विबुधा रमन्ते
02020261 अथो अनन्तस्य मुखानलेन । दन्दह्यमानं स निरीक्ष्य विश्वम्
02020262 निर्याति सिद्धेश्वर-युष्ट-धिष्ण्यं । यद्द्वै-परार्ध्यं तदु पारमेष्ठ्यम्
02020271 न यत्र शोको न जरा न मृत्युर् । नार्तिर्न चोद्वेग ऋते कुतश्चित्
02020272 यच् चित् ततोऽदः कृपयानिद-विदां । दुरन्त-दुःख-प्रभवानुदर्शनात्
02020281 ततो विशेषं प्रतिपद्य निर्भयस् । तेनात्मनापोऽनल-मूर्तिरत्वरन्
02020282 ज्योतिर्मयो वायुम् उपेत्य काले । वाय्व्-आत्मना खं बृहदात्म-लिङ्गम्
02020291 घ्राणेन गन्धं रसनेन वै रसं । रूपं च दृष्ट्या श्वसनं त्वचैव
02020292 श्रोत्रेण चोपेत्य नभो-गुणत्वं । प्राणेन चाकूतिम् उपैति योगी
02020301 स भूत-सूक्ष्मेन्द्रिय-सन्निकर्षं । मनोमयं देवमयं विकार्यम्
02020302 संसाद्य गत्या सह तेन याति । विज्ञान-तत्त्वं गुण-सन्निरोधम्
02020311 तेनात्मनात्मानम् उपैति शान्तम् । आनन्दम् आनन्दमयोऽवसाने
02020312 एतां गतिं भागवतीं गतो यः । स वै पुनर्नेह विषज्जतेऽङ्ग
02020321 एते सृती ते नृप वेद-गीते । त्वयाभिपृष्टे च सनातने च
02020322 ये वै पुरा ब्रह्मण आह तुष्ट । आराधितो भगवान् वासुदेवः

02020331 न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह
02020332 वासुदेवे भगवति भक्ति-योगो यतो भवेत्
02020341 भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया
02020342 तदध्यवस्यत् कूट-स्थो रतिरात्मन् यतो भवेत्
02020351 भगवान् सर्व-भूतेषु लक्षितः स्वात्मना हरिः
02020352 दृश्यैर्बुद्ध्य्-आदिभिर्द्रष्टा लक्षणैरनुमापकैः
02020361 तस्मात् सर्वात्मना राजन् हरिः सर्वत्र सर्वदा
02020362 श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान् नृणाम्
02020371 पिबन्ति ये भगवत आत्मनः सतां ।कथामृतं श्रवण-पुटेषु सम्भृतम्
02020372 पुनन्ति ते विषय-विदूषिताशयं ।व्रजन्ति तच्-चरण-सरोरुहान्तिकम्

# Chapter 3

0203001 श्री-शुक उवाच
02030011 एवम् एतन् निगदितं पृष्टवान् यद्भवान् मम
02030012 नृणां यन् म्रियमाणानां मनुष्येषु मनीषिणाम्
02030021 ब्रह्म-वर्चस-कामस्तु यजेत ब्रह्मणः पतिम्
02030022 इन्द्रम् इन्द्रिय-कामस्तु प्रजा-कामः प्रजापतीन्
02030031 देवीं मायां तु श्री-कामस्तेजस्-कामो विभावसुम्
02030032 वसु-कामो वसून् रुद्रान् वीर्य-कामोऽथ वीर्यवान्
02030041 अन्नाद्य-कामस्त्वदितिं स्वर्ग-कामोऽदितेः सुतान्
02030042 विश्वान् देवान् राज्य-कामः साध्यान् संसाधको विशाम्
02030051 आयुष्-कामोऽश्विनौ देवौ पुष्टि-काम इलां यजेत्
02030052 प्रतिष्ठा-कामः पुरुषो रोदसी लोक-मातरौ
02030061 रूपाभिकामो गन्धर्वान् स्त्री-कामोऽप्सर उर्वशीम्
02030062 आधिपत्य-कामः सर्वेषां यजेत परमेष्ठिनम्
02030071 यज्ञं यजेद्यशस्-कामः कोश-कामः प्रचेतसम्
02030072 विद्या-कामस्तु गिरिशं दाम्पत्यार्थ उमां सतीम्
02030081 धर्मार्थ उत्तम-श्लोकं तन्तुः तन्वन् पितॄ-न् यजेत्
02030082 रक्षा-कामः पुण्य-जनान् ओजस्-कामो मरुद्-गणान्
02030091 राज्य-कामो मनून् देवान् निरृतिं त्वभिचरन् यजेत्
02030092 काम-कामो यजेत् सोमम् अकामः पुरुषं परम्
02030101 अकामः सर्व-कामो वा मोक्ष-काम उदार-धीः
02030102 तीव्रेण भक्ति-योगेन यजेत पुरुषं परम्
02030111 एतावान् एव यजताम् इह निःश्रेयसोदयः
02030112 भगवत्यचलो भावो यद्भागवत-सङ्गतः
02030121 ज्ञानं यदाप्रतिनिवृत्त-गुणोर्मि-चक्रम्
02030122 आत्म-प्रसाद उत यत्र गुणेष्वसङ्गः
02030123 कैवल्य-सम्मत-पथस्त्वथ भक्ति-योगः
02030124 को निर्वृतो हरि-कथासु रतिं न कुर्यात्
0203013 शौनक उवाच

02030131 इत्यभिव्याहृतं राजा निशम्य भरतर्षभः
02030132 किम् अन्यत् पृष्टवान् भूयो वैयासकिम् ऋषिं कविम्
02030141 एतच् छुश्रूषतां विद्वन् सूत नोऽर्हसि भाषितुम्
02030142 कथा हरि-कथोदर्काः सतां स्युः सदसि ध्रुवम्
02030151 स वै भागवतो राजा पाण्डवेयो महा-रथः
02030152 बाल-क्रीडनकैः क्रीडन् कृष्ण-क्रीडां य आददे
02030161 वैयासकिश्च भगवान् वासुदेव-परायणः
02030162 उरुगाय-गुणोदाराः सतां स्युर्हि समागमे
02030171 आयुर्हरति वै पुंसाम् उद्यन्न् अस्तं च यन्न् असौ
02030172 तस्यर्ते यत्-क्षणो नीत उत्तम-श्लोक-वार्तया
02030181 तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत
02030182 न खादन्ति न मेहन्ति किं ग्रामे पशवोऽपरे
02030191 श्व-विड्-वराहोष्ट्र-खरैः संस्तुतः पुरुषः पशुः
02030192 न यत्-कर्ण-पथोपेतो जातु नाम गदाग्रजः
02030201 बिले बतोरुक्रम-विक्रमान् ये । न शृण्वतः कर्ण-पुटे नरस्य
02030202 जिह्वासती दार्दुरिकेव सूत । न चोपगायत्युरुगाय-गाथाः
02030211 भारः परं पट्ट-किरीट-जुष्टम् । अप्युत्तमाङ्गं न नमेन् मुकुन्दम्
02030212 शावौ करौ नो कुरुते सपर्यां । हरेर्लसत्-काञ्चन-कङ्कणौ वा
02030221 बर्हायिते ते नयने नराणां । लिङ्गानि विष्णोर्न निरीक्षतो ये
02030222 पादौ नृणां तौ द्रुम-जन्म-भाजौ । क्षेत्राणि नानुव्रजतो हरेर्यौ
02030231 जीवञ् छवो भागवताङ्घ्रि-रेणुं । न जातु मर्त्योऽभिलभेत यस्तु
02030232 श्री-विष्णु-पद्या मनुजस्तुलस्याः । श्वसञ् छवो यस्तु न वेद गन्धम्
02030241 तदश्म-सारं हृदयं बतेदं । यद्गृह्यमाणैर्हरि-नाम-धेयैः
02030242 न विक्रियेताथ यदा विकारो । नेत्रे जलं गात्र-रुहेषु हर्षः
02030251 अथाभिधेह्यङ्ग मनो-’नुकूलं प्रभाषसे भागवत-प्रधानः
02030252 यदाह वैयासकिरात्म-विद्या- । विशारदो नृपतिं साधु पृष्टः

# Chapter 4

0204001 सूत उवाच
02040011 वैयासकेरिति वचस्तत्त्व-निश्चयम् आत्मनः
02040012 उपधार्य मतिं कृष्णे औत्तरेयः सतीं व्यधात्
02040021 आत्म-जाया-सुतागार- पशु-द्रविण-बन्धुषु
02040022 राज्ये चाविकले नित्यं विरूढां ममतां जहौ
02040031 पप्रच्छ चेमम् एवार्थं यन् मां पृच्छथ सत्तमाः
02040032 कृष्णानुभाव-श्रवणे श्रद्दधानो महा-मनाः
02040041 संस्थां विज्ञाय सन्न्यस्य कर्म त्रै-वर्गिकं च यत्
02040042 वासुदेवे भगवति आत्म-भावं दृढं गतः
0204005 राजोवाच
02040051 समीचीनं वचो ब्रह्मन् सर्व-ज्ञस्य तवानघ
02040052 तमो विशीर्यते मह्यं हरेः कथयतः कथाम्
02040061 भूय एव विवित्सामि भगवान् आत्म-मायया
02040062 यथेदं सृजते विश्वं दुर्विभाव्यम् अधीश्वरैः
02040071 यथा गोपायति विभुर्यथा संयच्छते पुनः
02040072 यां यां शक्तिम् उपाश्रित्य पुरु-शक्तिः परः पुमान्
02040073 आत्मानं क्रीडयन् क्रीडन् करोति विकरोति च
02040081 नूनं भगवतो ब्रह्मन् हरेरद्भुत-कर्मणः
02040082 दुर्विभाव्यम् इवाभाति कविभिश्चापि चेष्टितम्
02040091 यथा गुणांस्तु प्रकृतेर्युगपत् क्रमशोऽपि वा
02040092 बिभर्ति भूरिशस्त्वेकः कुर्वन् कर्माणि जन्मभिः
02040101 विचिकित्सितम् एतन् मे ब्रवीतु भगवान् यथा
02040102 शाब्दे ब्रह्मणि निष्णातः परस्मिंश्च भवान् खलु
0204011 सूत उवाच
02040111 इत्युपामन्त्रितो राज्ञा गुणानुकथने हरेः
02040112 हृषीकेशम् अनुस्मृत्य प्रतिवक्तुं प्रचक्रमे
0204012 श्री-शुक उवाच
02040121 नमः परस्मै पुरुषाय भूयसे सद्-उद्भव-स्थान-निरोध-लीलया

02040122 गृहीत-शक्ति-त्रितयाय देहिनाम् अन्तर्भवायानुपलक्ष्य-वर्त्मने
02040131 भूयो नमः सद्-वृजिन-च्छिदेऽसताम् असम्भवायाखिल-सत्त्व-मूर्तये
02040132 पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानाम् अनुमृग्य-दाशुषे
02040141 नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूर-काष्ठाय मुहुः कुयोगिनाम्
02040142 निरस्त-साम्यातिशयेन राधसा स्व-धामनि ब्रह्मणि रंस्यते नमः
02040151 यत्-कीर्तनं यत्-स्मरणं यद्-ईक्षणं यद्-वन्दनं यच्-छ्रवणं यद्-अर्हणम्
02040152 लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्र-श्रवसे नमो नमः
02040161 विचक्षणा यच्-चरणोपसादनात् सङ्गं व्युदस्योभयतोऽन्तर्-आत्मनः
02040162 विन्दन्ति हि ब्रह्म-गतिं गत-क्लमास्तस्मै सुभद्र-श्रवसे नमो नमः
02040171 तपस्विनो दान-परा यशस्विनो मनस्विनो मन्त्र-विदः सुमङ्गलाः
02040172 क्षेमं न विन्दन्ति विना यद्-अर्पणं तस्मै सुभद्र-श्रवसे नमो नमः
02040181 किरात-हूणान्ध्र-पुलिन्द-पुल्कशा आभीर-शुम्भा यवनाः खसादयः
02040182 येऽन्ये च पापा यद्-अपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः
02040191 स एष आत्मात्मवताम् अधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः
02040192 गत-व्यलीकैरज-शङ्करादिभिर्वितर्क्य-लिङ्गो भगवान् प्रसीदताम्
02040201 श्रियः पतिर्यज्ञ-पतिः प्रजा-पतिर्धियां पतिर्लोक-पतिर्धरा-पतिः
02040202 पतिर्गतिश्चान्धक-वृष्णि-सात्वतां प्रसीदतां मे भगवान् सतां पतिः
02040211 यद्-अङ्घ्र्य्-अभिध्यान-समाधि-धौतया धियानुपश्यन्ति हि तत्त्वम् आत्मनः
02040212 वदन्ति चैतत् कवयो यथा-रुचं स मे मुकुन्दो भगवान् प्रसीदताम्
02040221 प्रचोदिता येन पुरा सरस्वती वितन्वताजस्य सतीं स्मृतिं हृदि
02040222 स्व-लक्षणा प्रादुरभूत् किलास्यतः स मे ऋषीणाम् ऋषभः प्रसीदताम्
02040231 भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः
02040232 भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलङ्कृषीष्ट भगवान् वचांसि मे
02040241 नमस्तस्मै भगवते वासुदेवाय वेधसे
02040242 पपुर्ज्ञानम् अयं सौम्या यन्-मुखाम्बुरुहासवम्
02040251 एतदेवात्म-भू राजन् नारदाय विपृच्छते
02040252 वेद-गर्भोऽभ्यधात् साक्षाद्यदाह हरिरात्मनः

# Chapter 5

0205001 नारद उवाच
02050011 देव-देव नमस्तेऽस्तु भूत-भावन पूर्वज
02050012 तद्विजानीहि यज् ज्ञानम् आत्म-तत्त्व-निदर्शनम्
02050021 यद्रूपं यदधिष्ठानं यतः सृष्टम् इदं प्रभो
02050022 यत् संस्थं यत् परं यच् च तत् तत्त्वं वद तत्त्वतः
02050031 सर्वं ह्येतद्भवान् वेद भूत-भव्य-भवत्-प्रभुः
02050032 करामलक-वद्विश्वं विज्ञानावसितं तव
02050041 यद्-विज्ञानो यद्-आधारो यत्-परस्त्वं यद्-आत्मकः
02050042 एकः सृजसि भूतानि भूतैरेवात्म-मायया
02050051 आत्मन् भावयसे तानि न पराभावयन् स्वयम्
02050052 आत्म-शक्तिम् अवष्टभ्य ऊर्णनाभिरिवाक्लमः
02050061 नाहं वेद परं ह्यस्मिन् नापरं न समं विभो
02050062 नाम-रूप-गुणैर्भाव्यं सद्-असत् किञ्चिदन्यतः
02050071 स भवान् अचरद्घोरं यत् तपः सुसमाहितः
02050072 तेन खेदयसे नस्त्वं परा-शङ्कां च यच्छसि
02050081 एतन् मे पृच्छतः सर्वं सर्व-ज्ञ सकलेश्वर
02050082 विजानीहि यथैवेदम् अहं बुध्येऽनुशासितः
0205009 ब्रह्मोवाच
02050091 सम्यक् कारुणिकस्येदं वत्स ते विचिकित्सितम्
02050092 यदहं चोदितः सौम्य भगवद्-वीर्य-दर्शने
02050101 नानृतं तव तच् चापि यथा मां प्रब्रवीषि भोः
02050102 अविज्ञाय परं मत्त एतावत् त्वं यतो हि मे
02050111 येन स्व-रोचिषा विश्वं रोचितं रोचयाम्यहम्
02050112 यथार्कोऽग्निर्यथा सोमो यथर्क्ष-ग्रह-तारकाः
02050121 तस्मै नमो भगवते वासुदेवाय धीमहि
02050122 यन्-मायया दुर्जयया मां वदन्ति जगद्-गुरुम्
02050131 विलज्जमानया यस्य स्थातुम् ईक्षा-पथेऽमुया
02050132 विमोहिता विकत्थन्ते ममाहम् इति दुर्धियः

02050141 द्रव्यं कर्म च कालश्च स्वभावो जीव एव च
02050142 वासुदेवात् परो ब्रह्मन् न चान्योऽर्थोऽस्ति तत्त्वतः
02050151 नारायण-परा वेदा देवा नारायणाङ्गजाः
02050152 नारायण-परा लोका नारायण-परा मखाः
02050161 नारायण-परो योगो नारायण-परं तपः
02050162 नारायण-परं ज्ञानं नारायण-परा गतिः
02050171 तस्यापि द्रष्टुरीशस्य कूट-स्थस्याखिलात्मनः
02050172 सृज्यं सृजामि सृष्टोऽहम् ईक्षयैवाभिचोदितः
02050181 सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः
02050182 स्थिति-सर्ग-निरोधेषु गृहीता मायया विभोः
02050191 कार्य-कारण-कर्तृत्वे द्रव्य-ज्ञान-क्रियाश्रयाः
02050192 बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः
02050201 स एष भगवँआल्लिङ्गैस्त्रिभिरेतैरधोक्षजः
02050202 स्वलक्षित-गतिर्ब्रह्मन् सर्वेषां मम चेश्वरः
02050211 कालं कर्म स्वभावं च मायेशो मायया स्वया
02050212 आत्मन् यदृच्छया प्राप्तं विबुभूषुरुपाददे
02050221 कालाद्गुण-व्यतिकरः परिणामः स्वभावतः
02050222 कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत्
02050231 महतस्तु विकुर्वाणाद्रजः-सत्त्वोपबृंहितात्
02050232 तमः-प्रधानस्त्वभवद्द्रव्य-ज्ञान-क्रियात्मकः
02050241 सोऽहङ्कार इति प्रोक्तो विकुर्वन् समभूत् त्रिधा
02050242 वैकारिकस्तैजसश्च तामसश्चेति यद्-भिदा
02050243 द्रव्य-शक्तिः क्रिया-शक्तिर्ज्ञान-शक्तिरिति प्रभो
02050251 तामसादपि भूतादेर्विकुर्वाणादभून् नभः
02050252 तस्य मात्रा गुणः शब्दो लिङ्गं यद्द्रष्टृ-दृश्ययोः
02050261 नभसोऽथ विकुर्वाणादभूत् स्पर्श-गुणोऽनिलः
02050262 परान्वयाच् छब्दवांश्च प्राण ओजः सहो बलम्
02050271 वायोरपि विकुर्वाणात् काल-कर्म-स्वभावतः
02050272 उदपद्यत तेजो वै रूपवत् स्पर्श-शब्दवत्
02050281 तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम्
02050282 रूपवत् स्पर्शवच् चाम्भो घोषवच् च परान्वयात्
02050291 विशेषस्तु विकुर्वाणादम्भसो गन्धवान् अभूत्
02050292 परान्वयाद्रस-स्पर्श- शब्द-रूप-गुणान्वितः
02050301 वैकारिकान् मनो जज्ञे देवा वैकारिका दश
02050302 दिग्-वातार्क-प्रचेतोऽश्वि- वह्नीन्द्रोपेन्द्र-मित्र-काः
02050311 तैजसात् तु विकुर्वाणादिन्द्रियाणि दशाभवन्
02050312 ज्ञान-शक्तिः क्रिया-शक्तिर्बुद्धिः प्राणश्च तैजसौ
02050313 श्रोत्रं त्वग्-घ्राण-दृग्-जिह्वा वाग्-दोर्-मेढ्राङ्घ्रि-पायवः
02050321 यदैतेऽसङ्गता भावा भूतेन्द्रिय-मनो-गुणाः

02050322 यदायतन-निर्माणे न शेकुर्ब्रह्म-वित्तम
02050331 तदा संहत्य चान्योन्यं भगवच्-छक्ति-चोदिताः
02050332 सद्-असत्त्वम् उपादाय चोभयं ससृजुर्ह्यदः
02050341 वर्ष-पूग-सहस्रान्ते तदण्डम् उदके शयम्
02050342 काल-कर्म-स्वभाव-स्थो जीवो ऽजीवम् अजीवयत्
02050351 स एव पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः
02050352 सहस्रोर्व्-अङ्घ्रि-बाह्व्-अक्षः सहस्रानन-शीर्षवान्
02050361 यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः
02050362 कट्य्-आदिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः
02050371 पुरुषस्य मुखं ब्रह्म क्षत्रम् एतस्य बाहवः
02050372 ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रो व्यजायत
02050381 भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः
02050382 हृदा स्वर्लोक उरसा महर्लोको महात्मनः
02050391 ग्रीवायां जनलोकोऽस्य तपोलोकः स्तन-द्वयात्
02050392 मूर्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः
02050401 तत्-कट्यां चातलं कॢप्तम् ऊरुभ्यां वितलं विभोः
02050402 जानुभ्यां सुतलं शुद्धं जङ्घाभ्यां तु तलातलम्
02050411 महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम्
02050412 पातालं पाद-तलत इति लोकमयः पुमान्
02050421 भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः
02050422 स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोक-कल्पना

# Chapter 6

0206001 ब्रह्मोवाच
02060011 वाचां वह्नेर्मुखं क्षेत्रं छन्दसां सप्त धातवः
02060012 हव्य-कव्यामृतान्नानां जिह्वा सर्व-रसस्य च
02060021 सर्वासूनां च वायोश्च तन्-नासे परमायणे
02060022 अश्विनोरोषधीनां च घ्राणो मोद-प्रमोदयोः
02060031 रूपाणां तेजसां चक्षुर्दिवः सूर्यस्य चाक्षिणी
02060032 कर्णौ दिशां च तीर्थानां श्रोत्रम् आकाश-शब्दयोः
02060033 तद्-गात्रं वस्तु-साराणां सौभगस्य च भाजनम्
02060041 त्वग् अस्य स्पर्श-वायोश्च सर्व-मेधस्य चैव हि
02060042 रोमाण्युद्भिज्ज-जातीनां यैर्वा यज्ञस्तु सम्भृतः
02060051 केश-श्मश्रु-नखान्यस्य शिला-लोहाभ्र-विद्युताम्
02060052 बाहवो लोक-पालानां प्रायशः क्षेम-कर्मणाम्
02060061 विक्रमो भूर्भुवः स्वश्च क्षेमस्य शरणस्य च
02060062 सर्व-काम-वरस्यापि हरेश्चरण आस्पदम्
02060071 अपां वीर्यस्य सर्गस्य पर्जन्यस्य प्रजापतेः
02060072 पुंसः शिश्न उपस्थस्तु प्रजात्य्-आनन्द-निर्वृतेः
02060081 पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद
02060082 हिंसाया निरृतेर्मृत्योर्निरयस्य गुदं स्मृतः
02060091 पराभूतेरधर्मस्य तमसश्चापि पश्चिमः
02060092 नाड्यो नद-नदीनां च गोत्राणाम् अस्थि-संहतिः
02060101 अव्यक्त-रस-सिन्धूनां भूतानां निधनस्य च
02060102 उदरं विदितं पुंसो हृदयं मनसः पदम्
02060111 धर्मस्य मम तुभ्यं च कुमाराणां भवस्य च
02060112 विज्ञानस्य च सत्त्वस्य परस्यात्मा परायणम्
02060121 अहं भवान् भवश्चैव त इमे मुनयोऽग्रजाः
02060122 सुरासुर-नरा नागाः खगा मृग-सरीसृपाः
02060131 गन्धर्वाप्सरसो यक्षा रक्षो-भूत-गणोरगाः
02060132 पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः

02060141 अन्ये च विविधा जीवाजल-स्थल-नभौकसः
02060142 ग्रहर्क्ष-केतवस्तारास्तडितः स्तनयित्नवः
02060151 सर्वं पुरुष एवेदं भूतं भव्यं भवच् च यत्
02060152 तेनेदम् आवृतं विश्वं वितस्तिम् अधितिष्ठति
02060161 स्व-धिष्ण्यं प्रतपन् प्राणो बहिश्च प्रतपत्यसौ
02060162 एवं विराजं प्रतपंस्तपत्यन्तर्बहिः पुमान्
02060171 सोऽमृतस्याभयस्येशो मर्त्यम् अन्नं यदत्यगात्
02060172 महिमैष ततो ब्रह्मन् पुरुषस्य दुरत्ययः
02060181 पादेषु सर्व-भूतानि पुंसः स्थिति-पदो विदुः
02060182 अमृतं क्षेमम् अभयं त्रि-मूर्ध्नोऽधायि मूर्धसु
02060191 पादास्त्रयो बहिश्चासन्न् अप्रजानां य आश्रमाः
02060192 अन्तस्त्रि-लोक्यास्त्वपरो गृह-मेधोऽबृहद्-व्रतः
02060201 सृती विचक्रमे विश्वम् साशनानशने उभे
02060202 यदविद्या च विद्या च पुरुषस्तूभयाश्रयः
02060211 यस्मादण्डं विराड्जज्ञे भूतेन्द्रिय-गुणात्मकः
02060212 तद्द्रव्यम् अत्यगाद्विश्वं गोभिः सूर्य इवातपन्
02060221 यदास्य नाभ्यान् नलिनादहम् आसं महात्मनः
02060222 नाविदं यज्ञ-सम्भारान् पुरुषावयवान् ऋते
02060231 तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः
02060232 इदं च देव-यजनं कालश्चोरु-गुणान्वितः
02060241 वस्तून्योषधयः स्नेहा रस-लोह-मृदो जलम्
02060242 ऋचो यजूंषि सामानि चातुर्-होत्रं च सत्तम
02060251 नाम-धेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च
02060252 देवतानुक्रमः कल्पः सङ्कल्पस्तन्त्रम् एव च
02060261 गतयो मतयश्चैव प्रायश्चित्तं समर्पणम्
02060262 पुरुषावयवैरेते सम्भाराः सम्भृता मया
02060271 इति सम्भृत-सम्भारः पुरुषावयवैरहम्
02060272 तम् एव पुरुषं यज्ञं तेनैवायजम् ईश्वरम्
02060281 ततस्ते भ्रातर इमे प्रजानां पतयो नव
02060282 अयजन् व्यक्तम् अव्यक्तं पुरुषं सु-समाहिताः
02060291 ततश्च मनवः काले ईजिरे ऋषयोऽपरे
02060292 पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम्
02060301 नारायणे भगवति तदिदं विश्वम् आहितम्
02060302 गृहीत-मायोरु-गुणः सर्गादावगुणः स्वतः
02060311 सृजामि तन्-नियुक्तोऽहं हरो हरति तद्-वशः
02060312 विश्वं पुरुष-रूपेण परिपाति त्रि-शक्ति-धृक्
02060321 इति तेऽभिहितं तात यथेदम् अनुपृच्छसि
02060322 नान्यद्भगवतः किञ्चिद्भाव्यं सद्-असद्-आत्मकम्
02060331 न भारती मेऽङ्ग मृषोपलक्ष्यते । न वै क्वचिन् मे मनसो मृषा गतिः

02060332 न मे हृषीकाणि पतन्त्यसत्-पथे ।यन् मे हृदौत्कण्ठ्यवता धृतो हरिः
02060341 सोऽहं समाम्नायमयस्तपोमयः प्रजापतीनाम् अभिवन्दितः पतिः
02060342 आस्थाय योगं निपुणं समाहितस्तं नाध्यगच्छं यत आत्म-सम्भवः
02060351 नतोऽस्म्यहं तच्-चरणं समीयुषां ।भवच्-छिदं स्वस्त्य्-अयनं सुमङ्गलम्
02060352 यो ह्यात्म-माया-विभवं स्म पर्यगाद् । यथा नभः स्वान्तम् अथापरे कुतः
02060361 नाहं न यूयं यद्-ऋतां गतिं विदुर् ।न वामदेवः किम् उतापरे सुराः
02060362 तन्-मायया मोहित-बुद्धयस्त्विदं ।विनिर्मितं चात्म-समं विचक्ष्महे
02060371 यस्यावतार-कर्माणि गायन्ति ह्यस्मद्-आदयः
02060372 न यं विदन्ति तत्त्वेन तस्मै भगवते नमः
02060381 स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः
02060382 आत्मात्मन्यात्मनात्मानं स संयच्छति पाति च
02060391 विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यग् अवस्थितम्
02060392 सत्यं पूर्णम् अनाद्य्-अन्तं निर्गुणं नित्यम् अद्वयम्
02060401 ऋषे विदन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः
02060402 यदा तदेवासत्-तर्कैस्तिरोधीयेत विप्लुतम्
02060411 आद्योऽवतारः पुरुषः परस्य ।कालः स्वभावः सद्-असन्-मनश्च
02060412 द्रव्यं विकारो गुण इन्द्रियाणि ।विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः
02060421 अहं भवो यज्ञ इमे प्रजेशा ।दक्षादयो ये भवद्-आदयश्च
02060422 स्वर्लोक-पालाः खगलोक-पाला ।नृलोक-पालास्तललोक-पालाः
02060431 गन्धर्व-विद्याधर-चारणेशा ।ये यक्ष-रक्षोरग-नाग-नाथाः
02060432 ये वा ऋषीणाम् ऋषभाः पित्-णां ।दैत्येन्द्र-सिद्धेश्वर-दानवेन्द्राः
02060433 अन्ये च ये प्रेत-पिशाच-भूत- ।कूष्माण्ड-यादो-मृग-पक्ष्य्-अधीशाः
02060441 यत् किञ्च लोके भगवन् महस्वद् ।ओजः-सहस्वद्बलवत् क्षमावत्
02060442 श्री-ह्री-विभूत्य्-आत्मवदद्भुतार्णं ।तत्त्वं परं रूपवदस्व-रूपम्
02060451 प्राधान्यतो यान् ऋष आमनन्ति ।लीलावतारान् पुरुषस्य भूम्नः
02060452 आपीयतां कर्ण-कषाय-शोषान् ।अनुक्रमिष्ये त इमान् सुपेशान्

# Chapter 7

0207001 ब्रह्मोवाच
02070011 यत्रोद्यतः क्षिति-तलोद्धरणाय बिभ्रत्
02070012 क्रौडीं तनुं सकल-यज्ञ-मयीम् अनन्तः
02070013 अन्तर्-महार्णव उपागतम् आदि-दैत्यं
02070014 तं दंष्ट्रयाद्रिम् इव वज्र-धरो ददार
02070021 जातो रुचेरजनयत् सुयमान् सुयज्ञ
02070022 आकूति-सूनुरमरान् अथ दक्षिणायाम्
02070023 लोक-त्रयस्य महतीम् अहरद्यदार्तिं
02070024 स्वायम्भुवेन मनुना हरिरित्यनूक्तः
02070031 जज्ञे च कर्दम-गृहे द्विज देवहूत्यां
02070032 स्त्रीभिः समं नवभिरात्म-गतिं स्व-मात्रे
02070033 ऊचे ययात्म-शमलं गुण-सङ्ग-पङ्कम्
02070034 अस्मिन् विधूय कपिलस्य गतिं प्रपेदे
02070041 अत्रेरपत्यम् अभिकाङ्क्षत आह तुष्टो
02070042 दत्तो मयाहम् इति यद्भगवान् स दत्तः
02070043 यत्-पाद-पङ्कज-पराग-पवित्र-देहा
02070044 योगर्द्धिम् आपुरुभयीं यदु-हैहयाद्याः
02070051 तप्तं तपो विविध-लोक-सिसृक्षया मे
02070052 आदौ सनात् स्व-तपसः स चतुः-सनोऽभूत्
02070053 प्राक्-कल्प-सम्प्लव-विनष्टम् इहात्म-तत्त्वं
02070054 सम्यग् जगाद मुनयो यदचक्षतात्मन्
02070061 धर्मस्य दक्ष-दुहितर्यजनिष्ट मूर्त्यां
02070062 नारायणो नर इति स्व-तपः-प्रभावः
02070063 दृष्ट्वात्मनो भगवतो नियमावलोपं
02070064 देव्यस्त्वनङ्ग-पृतना घटितुं न शेकुः
02070071 कामं दहन्ति कृतिनो ननु रोष-दृष्ट्या
02070072 रोषं दहन्तम् उत ते न दहन्त्यसह्यम्
02070073 सोऽयं यदन्तरम् अलं प्रविशन् बिभेति

02070074 कामः कथं नु पुनरस्य मनः श्रयेत
02070081 विद्धः सपत्न्य्-उदित-पत्रिभिरन्ति राज्ञो
02070082 बालोऽपि सन्न् उपगतस्तपसे वनानि
02070083 तस्मा अदाद्ध्रुव-गतिं गृणते प्रसन्नो
02070084 दिव्याः स्तुवन्ति मुनयो यदुपर्य्-अधस्तात्
02070091 यद्वेनम् उत्पथ-गतं द्विज-वाक्य-वज्र-
02070092 निष्प्लुष्ट-पौरुष-भगं निरये पतन्तम्
02070093 त्रात्वार्थितो जगति पुत्र-पदं च लेभे
02070094 दुग्धा वसूनि वसुधा सकलानि येन
02070101 नाभेरसावृषभ आस सुदेवि-सूनुर्
02070102 यो वै चचार सम-दृग् जड-योग-चर्याम्
02070103 यत् पारमहंस्यम् ऋषयः पदम् आमनन्ति
02070104 स्वस्थः प्रशान्त-करणः परिमुक्त-सङ्गः
02070111 सत्रे ममास भगवान् हय-शीरषाथो
02070112 साक्षात् स यज्ञ-पुरुषस्तपनीय-वर्णः
02070113 छन्दोमयो मखमयोऽखिल-देवतात्मा
02070114 वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः
02070121 मत्स्यो युगान्त-समये मनुनोपलब्धः
02070122 क्षोणीमयो निखिल-जीव-निकाय-केतः
02070123 विस्रंसितान् उरु-भये सलिले मुखान् मे
02070124 आदाय तत्र विजहार ह वेद-मार्गान्
02070131 क्षीरोदधावमर-दानव-यूथपानाम्
02070132 उन्मथ्नताम् अमृत-लब्धय आदि-देवः
02070133 पृष्ठेन कच्छप-वपुर्विदधार गोत्रं
02070134 निद्राक्षणोऽद्रि-परिवर्त-कषाण-कण्डूः
02070141 त्रै-पिष्टपोरु-भय-हा स नृसिंह-रूपं
02070142 कृत्वा भ्रमद्-भ्रुकुटि-दंष्ट्र-कराल-वक्त्रम्
02070143 दैत्येन्द्रम् आशु गदयाभिपतन्तम् आराद्
02070144 ऊरौ निपात्य विददार नखैः स्फुरन्तम्
02070151 अन्तः-सरस्युरु-बलेन पदे गृहीतो
02070152 ग्राहेण यूथ-पतिरम्बुज-हस्त आर्तः
02070153 आहेदम् आदि-पुरुषाखिल-लोक-नाथ
02070154 तीर्थ-श्रवः श्रवण-मङ्गल-नामधेय
02070161 श्रुत्वा हरिस्तम् अरणार्थिनम् अप्रमेयश्
02070162 चक्रायुधः पतगराज-भुजाधिरूढः
02070163 चक्रेण नक्र-वदनं विनिपाट्य तस्माद्
02070164 धस्ते प्रगृह्य भगवान् कृपयोज्जहार
02070171 ज्यायान् गुणैरवरजोऽप्यदितेः सुतानां
02070172 लोकान् विचक्रम इमान् यदथाधियज्ञः

02070173 क्ष्मां वामनेन जगृहे त्रिपद-च्छलेन
02070174 याञ्चाम् ऋते पथि चरन् प्रभुभिर्न चाल्यः
02070181 नार्थो बलेरयम् उरुक्रम-पाद-शौचम्
02070182 आपः शिखा-धृतवतो विबुधाधिपत्यम्
02070183 यो वै प्रतिश्रुतम् ऋते न चिकीर्षदन्यद्
02070184 आत्मानम् अङ्ग मनसा हरयेऽभिमेने
02070191 तुभ्यं च नारद भृशं भगवान् विवृद्ध-
02070192 भावेन साधु परितुष्ट उवाच योगम्
02070193 ज्ञानं च भागवतम् आत्म-सतत्त्व-दीपं
02070194 यद्वासुदेव-शरणा विदुरञ्जसैव
02070201 चक्रं च दिक्ष्वविहतं दशसु स्व-तेजो
02070202 मन्वन्तरेषु मनु-वंश-धरो बिभर्ति
02070203 दुष्टेषु राजसु दमं व्यदधात् स्व-कीर्तिं
02070204 सत्ये त्रि-पृष्ठ उशतीं प्रथयंश्चरित्रैः
02070211 धन्वन्तरिश्च भगवान् स्वयम् एव कीर्तिर्
02070212 नाम्ना नृणां पुरु-रुजां रुज आशु हन्ति
02070213 यज्ञे च भागम् अमृतायुर्-अवावरुन्ध
02070214 आयुष्य-वेदम् अनुशास्त्यवतीर्य लोके
02070221 क्षत्रं क्षयाय विधिनोपभृतं महात्मा
02070222 ब्रह्म-ध्रुग् उज्झित-पथं नरकार्ति-लिप्सु
02070223 उद्धन्त्यसाववनिकण्टकम् उग्र-वीर्यस्
02070224 त्रिः-सप्त-कृत्व उरुधार-परश्वधेन
02070231 अस्मत्-प्रसाद-सुमुखः कलया कलेश
02070232 इक्ष्वाकु-वंश अवतीर्य गुरोर्निदेशे
02070233 तिष्ठन् वनं स-दयितानुज आविवेश
02070234 यस्मिन् विरुध्य दश-कन्धर आर्तिम् आर्च्छत्
02070241 यस्मा अदादुदधिरूढ-भयाङ्ग-वेपो
02070242 मार्गं सपद्यरि-पुरं हरवद्दिधक्षोः
02070243 दूरे सुहृन्-मथित-रोष-सुशोण-दृष्ट्या
02070244 तातप्यमान-मकरोरग-नक्र-चक्रः
02070251 वक्षः-स्थल-स्पर्श-रुग्न-महेन्द्र-वाह-
02070252 दन्तैर्विडम्बित-ककुब्जुष ऊढ-हासम्
02070253 सद्योऽसुभिः सह विनेष्यति दार-हर्तुर्
02070254 विस्फूर्जितैर्धनुष उच्चरतोऽधिसैन्ये
02070261 भूमेः सुरेतर-वरूथ-विमर्दितायाः
02070262 क्लेश-व्ययाय कलया सित-कृष्ण-केशः
02070263 जातः करिष्यति जनानुपलक्ष्य-मार्गः
02070264 कर्माणि चात्म-महिमोपनिबन्धनानि
02070271 तोकेन जीव-हरणं यदुलूकि-कायास्
02070272 त्रै-मासिकस्य च पदा शकटोऽपवृत्तः

02070273 यद्रिङ्गतान्तर-गतेन दिवि-स्पृशोर्वा
02070274 उन्मूलनं त्वितरथार्जुनयोर्न भाव्यम्
02070281 यद्वै व्रजे व्रज-पशून् विषतोय-पीतान्
02070282 पालांस्त्वजीवयदनुग्रह-दृष्टि-वृष्ट्या
02070283 तच्-छुद्धयेऽति-विष-वीर्य-विलोल-जिह्वम्
02070284 उच्चाटयिष्यदुरगं विहरन् ह्रदिन्याम्
02070291 तत् कर्म दिव्यम् इव यन् निशि निःशयानं
02070292 दावाग्निना शुचि-वने परिदह्यमाने
02070293 उन्नेष्यति व्रजम् अतोऽवसितान्त-कालं
02070294 नेत्रे पिधाप्य सबलोऽनधिगम्य-वीर्यः
02070301 गृह्णीत यद्यदुपबन्धम् अमुष्य माता
02070302 शुल्बं सुतस्य न तु तत् तदमुष्य माति
02070303 यज् जृम्भतोऽस्य वदने भुवनानि गोपी
02070304 संवीक्ष्य शङ्कित-मनाः प्रतिबोधितासीत्
02070311 नन्दं च मोक्ष्यति भयाद्वरुणस्य पाशाद्
02070312 गोपान् बिलेषु पिहितान् मय-सूनुना च
02070313 अह्न्यापृतं निशि शयानम् अतिश्रमेण
02070314 लोकं विकुण्ठम् उपनेष्यति गोकुलं स्म
02070321 गोपैर्मखे प्रतिहते व्रज-विप्लवाय
02070322 देवेऽभिवर्षति पशून् कृपया रिरक्षुः
02070323 धर्तोच्छिलीन्ध्रम् इव सप्त-दिनानि सप्त-
02070324 वर्षो महीध्रम् अनघैक-करे सलीलम्
02070331 क्रीडन् वने निशि निशाकर-रश्मि-गौर्यां
02070332 रासोन्मुखः कल-पदायत-मूर्च्छितेन
02070333 उद्दीपित-स्मर-रुजां व्रज-भृद्-वधूनां
02070334 हर्तुर्हरिष्यति शिरो धनदानुगस्य
02070341 ये च प्रलम्ब-खर-दर्दुर-केश्य्-अरिष्ट-
02070342 मल्लेभ-कंस-यवनाः कपि-पौण्ड्रकाद्याः
02070343 अन्ये च शाल्व-कुज-बल्वल-दन्तवक्र-
02070344 सप्तोक्ष-शम्बर-विदूरथ-रुक्मि-मुख्याः
02070351 ये वा मृधे समिति-शालिन आत्त-चापाः
02070352 काम्बोज-मत्स्य-कुरु-सृञ्जय-कैकयाद्याः
02070353 यास्यन्त्यदर्शनम् अलं बल-पार्थ-भीम-
02070354 व्याजाह्वयेन हरिणा निलयं तदीयम्
02070361 कालेन मीलित-धियाम् अवमृश्य न्-णां
02070362 स्तोकायुषां स्व-निगमो बत दूर-पारः
02070363 आविर्हितस्त्वनुयुगं स हि सत्यवत्यां
02070364 वेद-द्रुमं विट-पशो विभजिष्यति स्म
02070371 देव-द्विषां निगम-वर्त्मनि निष्ठितानां

02070372 पूर्भिर्मयेन विहिताभिरदृश्य-तूर्भिः
02070373 लोकान् घ्नतां मति-विमोहम् अतिप्रलोभं
02070374 वेषं विधाय बहु भाष्यत औपधर्म्यम्
02070381 यर्ह्यालयेष्वपि सतां न हरेः कथाः स्युः
02070382 पाषण्डिनो द्विज-जना वृषला नृदेवाः
02070383 स्वाहा स्वधा वषडिति स्म गिरो न यत्र
02070384 शास्ता भविष्यति कलेर्भगवान् युगान्ते
02070391 सर्गे तपोऽहम् ऋषयो नव ये प्रजेशाः
02070392 स्थानेऽथ धर्म-मख-मन्व्-अमरावनीशाः
02070393 अन्ते त्वधर्म-हर-मन्यु-वशासुराद्या
02070394 माया-विभूतय इमाः पुरु-शक्ति-भाजः
02070401 विष्णोर्नु वीर्य-गणनां कतमोऽर्हतीह
02070402 यः पार्थिवान्यपि कविर्विममे रजांसि
02070403 चस्कम्भ यः स्व-रहसास्खलता त्रि-पृष्ठं
02070404 यस्मात् त्रि-साम्य-सदनादुरु-कम्पयानम्
02070411 नान्तं विदाम्यहम् अमी मुनयोऽग्र-जास्ते
02070412 माया-बलस्य पुरुषस्य कुतोऽवरा ये
02070413 गायन् गुणान् दश-शतानन आदि-देवः
02070414 शेषोऽधुनापि समवस्यति नास्य पारम्
02070421 येषां स एष भगवान् दययेदनन्तः
02070422 सर्वात्मनाश्रित-पदो यदि निर्व्यलीकम्
02070423 ते दुस्तराम् अतितरन्ति च देव-मायां
02070424 नैषां ममाहम् इति धीः श्व-शृगाल-भक्ष्ये
02070431 वेदाहम् अङ्ग परमस्य हि योग-मायां
02070432 यूयं भवश्च भगवान् अथ दैत्य-वर्यः
02070433 पत्नी मनोः स च मनुश्च तद्-आत्मजाश्च
02070434 प्राचीनबर्हिर्ऋभुरङ्ग उत ध्रुवश्च
02070441 इक्ष्वाकुरैल-मुचुकुन्द-विदेह-गाधि-
02070442 रघ्व्-अम्बरीष-सगरा गय-नाहुषाद्याः
02070443 मान्धात्र्-अलर्क-शतधन्व्-अनु-रन्तिदेवा
02070444 देवव्रतो बलिरमूर्त्तरयो दिलीपः
02070451 सौभर्य्-उतङ्क-शिबि-देवल-पिप्पलाद-
02070452 सारस्वतोद्धव-पराशर-भूरिषेणाः
02070453 येऽन्ये विभीषण-हनूमद्-उपेन्द्रदत्त-
02070454 पार्थार्ष्टिषेण-विदुर-श्रुतदेव-वर्याः
02070461 ते वै विदन्त्यतितरन्ति च देव-मायां
02070462 स्त्री-शूद्र-हूण-शबरा अपि पाप-जीवाः
02070463 यद्यद्भुत-क्रम-परायण-शील-शिक्षास्
02070464 तिर्यग्-जना अपि किम् उ श्रुत-धारणा ये
02070471 शश्वत् प्रशान्तम् अभयं प्रतिबोध-मात्रं

02070472 शुद्धं समं सद्-असतः परमात्म-तत्त्वम्
02070473 शब्दो न यत्र पुरु-कारकवान् क्रियार्थो
02070474 माया परैत्यभिमुखे च विलज्जमाना
02070481 तद्वै पदं भगवतः परमस्य पुंसो
02070482 ब्रह्मेति यद्विदुरजस्र-सुखं विशोकम्
02070483 सध्र्यङ् नियम्य यतयो यम-कर्त-हेतिं
02070484 जह्युः स्वराडिव निपान-खनित्रम् इन्द्रः
02070491 स श्रेयसाम् अपि विभुर्भगवान् यतोऽस्य
02070492 भाव-स्वभाव-विहितस्य सतः प्रसिद्धिः
02070493 देहे स्व-धातु-विगमेऽनुविशीर्यमाणे
02070494 व्योमेव तत्र पुरुषो न विशीर्यते ज्ञः
02070501 सोऽयं तेऽभिहितस्तात भगवान् विश्व-भावनः
02070502 समासेन हरेर्नान्यदन्यस्मात् सद्-असच् च यत्
02070511 इदं भागवतं नाम यन् मे भगवतोदितम्
02070512 सङ्ग्रहोऽयं विभूतीनां त्वम् एतद्विपुली कुरु
02070521 यथा हरौ भगवति नृणां भक्तिर्भविष्यति
02070522 सर्वात्मन्यखिलाधारे इति सङ्कल्प्य वर्णय
02070531 मायां वर्णयतोऽमुष्य ईश्वरस्यानुमोदतः
02070532 शृण्वतः श्रद्धया नित्यं माययात्मा न मुह्यति

# Chapter 8

0208001 राजोवाच
02080011 ब्रह्मणा चोदितो ब्रह्मन् गुणाख्यानेऽगुणस्य च
02080012 यस्मै यस्मै यथा प्राह नारदो देव-दर्शनः
02080021 एतद्वेदितुम् इच्छामि तत्त्वं तत्त्व-विदां वर
02080022 हरेरद्भुत-वीर्यस्य कथा लोक-सुमङ्गलाः
02080031 कथयस्व महाभाग यथाहम् अखिलात्मनि
02080032 कृष्णे निवेश्य निःसङ्गं मनस्त्यक्ष्ये कलेवरम्
02080041 शृण्वतः श्रद्धया नित्यं गृणतश्च स्व-चेष्टितम्
02080042 कालेन नातिदीर्घेण भगवान् विशते हृदि
02080051 प्रविष्टः कर्ण-रन्ध्रेण स्वानां भाव-सरोरुहम्
02080052 धुनोति शमलं कृष्णः सलिलस्य यथा शरत्
02080061 धौतात्मा पुरुषः कृष्ण- पाद-मूलं न मुञ्चति
02080062 मुक्त-सर्व-परिक्लेशः पान्थः स्व-शरणं यथा
02080071 यदधातु-मतो ब्रह्मन् देहारम्भोऽस्य धातुभिः
02080072 यदृच्छया हेतुना वा भवन्तो जानते यथा
02080081 आसीद्यद्-उदरात् पद्मं लोक-संस्थान-लक्षणम्
02080082 यावान् अयं वै पुरुष इयत्तावयवैः पृथक्
02080083 तावान् असाविति प्रोक्तः संस्थावयववान् इव
02080091 अजः सृजति भूतानि भूतात्मा यद्-अनुग्रहात्
02080092 ददृशे येन तद्-रूपं नाभि-पद्म-समुद्भवः
02080101 स चापि यत्र पुरुषो विश्व-स्थित्य्-उद्भवाप्ययः
02080102 मुक्त्वात्म-मायां मायेशः शेते सर्व-गुहाशयः
02080111 पुरुषावयवैर्लोकाः सपालाः पूर्व-कल्पिताः
02080112 लोकैरमुष्यावयवाः स-पालैरिति शुश्रुम
02080121 यावान् कल्पो विकल्पो वा यथा कालोऽनुमीयते
02080122 भूत-भव्य-भवच्-छब्द आयुर्-मानं च यत् सतः
02080131 कालस्यानुगतिर्या तु लक्ष्यतेऽण्वी बृहत्यपि
02080132 यावत्यः कर्म-गतयो यादृशीर्द्विज-सत्तम

02080141 यस्मिन् कर्म-समावायो यथा येनोपगृह्यते
02080142 गुणानां गुणिनां चैव परिणामम् अभीप्सताम्
02080151 भू-पाताल-ककुब्-व्योम- ग्रह-नक्षत्र-भूभृताम्
02080152 सरित्-समुद्र-द्वीपानां सम्भवश्चैतद्-ओकसाम्
02080161 प्रमाणम् अण्ड-कोशस्य बाह्याभ्यन्तर-भेदतः
02080162 महतां चानुचरितं वर्णाश्रम-विनिश्चयः
02080171 युगानि युग-मानं च धर्मो यश्च युगे युगे
02080172 अवतारानुचरितं यदाश्चर्यतमं हरेः
02080181 नृणां साधारणो धर्मः सविशेषश्च यादृशः
02080182 श्रेणीनां राजर्षीणां च धर्मः कृच्छ्रेषु जीवताम्
02080191 तत्त्वानां परिसङ्ख्यानं लक्षणं हेतु-लक्षणम्
02080192 पुरुषाराधन-विधिर्योगस्याध्यात्मिकस्य च
02080201 योगेश्वरैश्वर्य-गतिर्लिङ्ग-भङ्गस्तु योगिनाम्
02080202 वेदोपवेद-धर्माणाम् इतिहास-पुराणयोः
02080211 सम्प्लवः सर्व-भूतानां विक्रमः प्रतिसङ्क्रमः
02080212 इष्टा-पूर्तस्य काम्यानां त्रि-वर्गस्य च यो विधिः
02080221 यो वानुशायिनां सर्गः पाषण्डस्य च सम्भवः
02080222 आत्मनो बन्ध-मोक्षौ च व्यवस्थानं स्व-रूपतः
02080231 यथात्म-तन्त्रो भगवान् विक्रीडत्यात्म-मायया
02080232 विसृज्य वा यथा मायाम् उदास्ते साक्षिवद्विभुः
02080241 सर्वम् एतच् च भगवन् पृच्छतो मेऽनुपूर्वशः
02080242 तत्त्वतोऽर्हस्युदाहर्तुं प्रपन्नाय महा-मुने
02080251 अत्र प्रमाणं हि भवान् परमेष्ठी यथात्म-भूः
02080252 अपरे चानुतिष्ठन्ति पूर्वेषां पूर्व-जैः कृतम्
02080261 न मेऽसवः परायन्ति ब्रह्मन्न् अनशनादमी
02080262 पिबतो ऽच्युत-पीयूषम् तद्वाक्याब्धि-विनिःसृतम्
0208027 सूत उवाच
02080271 स उपामन्त्रितो राज्ञा कथायाम् इति सत्-पतेः
02080272 ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि
02080281 प्राह भागवतं नाम पुराणं ब्रह्म-सम्मितम्
02080282 ब्रह्मणे भगवत्-प्रोक्तं ब्रह्म-कल्प उपागते
02080291 यद्यत् परीक्षिदृषभः पाण्डूनाम् अनुपृच्छति
02080292 आनुपूर्व्येण तत् सर्वम् आख्यातुम् उपचक्रमे

# Chapter 9

0209001 श्री-शुक उवाच
02090011 आत्म-मायाम् ऋते राजन् परस्यानुभवात्मनः
02090012 न घटेतार्थ-सम्बन्धः स्वप्न-द्रष्टुरिवाञ्जसा
02090021 बहु-रूप इवाभाति मायया बहु-रूपया
02090022 रममाणो गुणेष्वस्या ममाहम् इति मन्यते
02090031 यर्हि वाव महिम्नि स्वे परस्मिन् काल-माययोः
02090032 रमेत गत-सम्मोहस्त्यक्त्वोदास्ते तदोभयम्
02090041 आत्म-तत्त्व-विशुद्ध्य-अर्थं यदाह भगवान् ऋतम्
02090042 ब्रह्मणे दर्शयन् रूपम् अव्यलीक-व्रतादृतः
02090051 स आदि-देवो जगतां परो गुरुः ।स्वधिष्ण्यम् आस्थाय सिसृक्षयैक्षत
02090052 तां नाध्यगच्छद्दृशम् अत्र सम्मतां ।प्रपञ्च-निर्माण-विधिर्यया भवेत्
02090061 स चिन्तयन् द्व्य्-अक्षरम् एकदाम्भस्य् ।उपाशृणोद्द्विर्-गदितं वचो विभुः
02090062 स्पर्शेषु यत् षोडशम् एकविंशं ।निष्किञ्चनानां नृप यद्धनं विदुः
02090071 निशम्य तद्-वक्तृ-दिदृक्षया दिशो विलोक्य तत्रान्यदपश्यमानः
02090072 स्वधिष्ण्यम् आस्थाय विमृश्य तद्-धितं तपस्युपादिष्ट इवादधे मनः
02090081 दिव्यं सहस्राब्दम् अमोघ-दर्शनो जितानिलात्मा विजितोभयेन्द्रियः
02090082 अतप्यत स्माखिल-लोक-तापनं तपस्तपीयांस्तपतां समाहितः
02090091 तस्मै स्व-लोकं भगवान् सभाजितः ।सन्दर्शयाम् आस परं न यत्-परम्
02090092 व्यपेत-सङ्क्लेश-विमोह-साध्वसं ।स्व-दृष्टवद्भिर्पुरुषैरभिष्टुतम्
02090101 प्रवर्तते यत्र रजस्तमस्तयोः ।सत्त्वं च मिश्रं न च काल-विक्रमः
02090102 न यत्र माया किम् उतापरे हरेर् ।अनुव्रता यत्र सुरासुरार्चिताः
02090111 श्यामावदाताः शत-पत्र-लोचनाः ।पिशङ्ग-वस्त्राः सुरुचः सुपेशसः
02090112 सर्वे चतुर्-बाहव उन्मिषन्-मणि- ।प्रवेक-निष्काभरणाः सुवर्चसः
02090113 प्रवाल-वैदूर्य-मृणाल-वर्चसः ।परिस्फुरत्-कुण्डल-मौलि-मालिनः
02090121 भ्राजिष्णुभिर्यः परितो विराजते लसद्-विमानावलिभिर्महात्मनाम्
02090122 विद्योतमानः प्रमदोत्तमाद्युभिः सविद्युदभ्रावलिभिर्यथा नभः
02090131 श्रीर्यत्र रूपिण्युरुगाय-पादयोः ।करोति मानं बहुधा विभूतिभिः
02090132 प्रेङ्खं श्रिता या कुसुमाकरानुगैर् ।विगीयमाना प्रिय-कर्म गायती

02090141 ददर्श तत्राखिल-सात्वतां पतिं ।श्रियः पतिं यज्ञ-पतिं जगत्-पतिम्
02090142 सुनन्द-नन्द-प्रबलार्हणादिभिः ।स्व-पार्षदाग्रैः परिसेवितं विभुम्
02090151 भृत्य-प्रसादाभिमुखं दृग्-आसवं ।प्रसन्न-हासारुण-लोचनाननम्
02090152 किरीटिनं कुण्डलिनं चतुर्-भुजं ।पीतांशुकं वक्षसि लक्षितं श्रिया
02090161 अध्यर्हणीयासनम् आस्थितं परं वृतं चतुः-षोडश-पञ्च-शक्तिभिः
02090162 युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव धामन् रममाणम् ईश्वरम्
02090171 तद्-दर्शनाह्लाद-परिप्लुतान्तरो ।हृष्यत्-तनुः प्रेम-भराश्रु-लोचनः
02090172 ननाम पादाम्बुजम् अस्य विश्व-सृग् ।यत् पारमहंस्येन पथाधिगम्यते
02090181 तं प्रीयमाणं समुपस्थितं कविं ।प्रजा-विसर्गे निज-शासनार्हणम्
02090182 बभाष ईषत्-स्मित-शोचिषा गिरा ।प्रियः प्रियं प्रीत-मनाः करे स्पृशन्
0209019 श्री-भगवान् उवाच
02090191 त्वयाहं तोषितः सम्यग् वेद-गर्भ सिसृक्षया
02090192 चिरं भृतेन तपसा दुस्तोषः कूट-योगिनाम्
02090201 वरं वरय भद्रं ते वरेशं माभिवाञ्छितम्
02090202 ब्रह्म' छ्रेयः-परिश्रामः पुंसां मद्-दर्शनावधिः
02090211 मनीषितानुभावोऽयं मम लोकावलोकनम्
02090212 यदुपश्रुत्य रहसि चकर्थ परमं तपः
02090221 प्रत्यादिष्टं मया तत्र त्वयि कर्म-विमोहिते
02090222 तपो मे हृदयं साक्षादात्माहं तपसोऽनघ
02090231 सृजामि तपसैवेदं ग्रसामि तपसा पुनः
02090232 बिभर्मि तपसा विश्वं वीर्यं मे दुश्चरं तपः
0209024 ब्रह्मोवाच
02090241 भगवन् सर्व-भूतानाम् अध्यक्षोऽवस्थितो गुहाम्
02090242 वेद ह्यप्रतिरुद्धेन प्रज्ञानेन चिकीर्षितम्
02090251 तथापि नाथमानस्य नाथ नाथय नाथितम्
02090252 परावरे यथा रूपेजानीयां ते त्वरूपिणः
02090261 यथात्म-माया-योगेन नाना-शक्त्य्-उपबृंहितम्
02090262 विलुम्पन् विसृजन् गृह्णन् बिभ्रदात्मानम् आत्मना
02090271 क्रीडस्यमोघ-सङ्कल्प ऊर्णनाभिर्यथोर्णुते
02090272 तथा तद्-विषयां धेहि मनीषां मयि माधव
02090281 भगवच्-छिक्षितम् अहं करवाणि ह्यतन्द्रितः
02090282 नेहमानः प्रजा-सर्गं बध्येयं यद्-अनुग्रहात्
02090291 यावत् सखा सख्युरिवेश ते कृतः प्रजा-विसर्गे विभजामि भो जनम्
02090292 अविक्लवस्ते परिकर्मणि स्थितो मा मे समुन्नद्ध-मदो ज्ञ मानिनः
0209030 श्री-भगवान् उवाच
02090301 ज्ञानं परम-गुह्यं मे यद्विज्ञान-समन्वितम्
02090302 सरहस्यं तद्-अङ्गं च गृहाण गदितं मया
02090311 यावान् अहं यथा-भावो यद्-रूप-गुण-कर्मकः
02090312 तथैव तत्त्व-विज्ञानम् अस्तु ते मद्-अनुग्रहात्
02090321 अहम् एवासम् एवाग्रे नान्यद्यत् सद्-असत् परम्

02090322 पश्चादहं यदेतच् च योऽवशिष्येत सोऽस्म्यहम्
02090331 ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि
02090332 तद्विद्यादात्मनो मायां यथाभासो यथा तमः
02090341 यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु
02090342 प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम्
02090351 एतावदेव जिज्ञास्यं तत्त्व-जिज्ञासुनात्मनः
02090352 अन्वय-व्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदा
02090361 एतन् मतं समातिष्ठ परमेण समाधिना
02090362 भवान् कल्प-विकल्पेषु न विमुह्यति कर्हिचित्
0209037 श्री-शुक उवाच
02090371 सम्प्रदिश्यैवम् अजनो जनानां परमेष्ठिनम्
02090372 पश्यतस्तस्य तद्रूपम् आत्मनो न्यरुणद्धरिः
02090381 अन्तर्हितेन्द्रियार्थाय हरये विहिताञ्जलिः
02090382 सर्व-भूतमयो विश्वं ससर्जेदं स पूर्ववत्
02090391 प्रजापतिर्धर्म-पतिरेकदा नियमान् यमान्
02090392 भद्रं प्रजानाम् अन्विच्छन्न् आतिष्ठत् स्वार्थ-काम्यया
02090401 तं नारदः प्रियतमो रिक्थादानाम् अनुव्रतः
02090402 शुश्रूषमाणः शीलेन प्रश्रयेण दमेन च
02090411 मायां विविदिषन् विष्णोर्मायेशस्य महा-मुनिः
02090412 महा-भागवतो राजन् पितरं पर्यतोषयत्
02090421 तुष्टं निशाम्य पितरं लोकानां प्रपितामहम्
02090422 देवर्षिः परिपप्रच्छ भवान् यन् मानुपृच्छति
02090431 तस्मा इदं भागवतं पुराणं दश-लक्षणम्
02090432 प्रोक्तं भगवता प्राह प्रीतः पुत्राय भूत-कृत्
02090441 नारदः प्राह मुनये सरस्वत्यास्तटे नृप
02090442 ध्यायते ब्रह्म परमं व्यासायामित-तेजसे
02090451 यदुताहं त्वया पृष्टो वैराजात् पुरुषादिदम्
02090452 यथासीत् तदुपाख्यास्ते प्रश्नान् अन्यांश्च कृत्स्नशः

# Chapter 10

0210001 श्री-शुक उवाच
02100011 अत्र सर्गो विसर्गश्च स्थानं पोषणम् ऊतयः
02100012 मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः
02100021 दशमस्य विशुद्ध्य्-अर्थं नवानाम् इह लक्षणम्
02100022 वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा
02100031 भूत-मात्रेन्द्रिय-धियां जन्म सर्ग उदाहृतः
02100032 ब्रह्मणो गुण-वैषम्याद्विसर्गः पौरुषः स्मृतः
02100041 स्थितिर्वैकुण्ठ-विजयः पोषणं तद्-अनुग्रहः
02100042 मन्वन्तराणि सद्-धर्म ऊतयः कर्म-वासनाः
02100051 अवतारानुचरितं हरेश्चास्यानुवर्तिनाम्
02100052 पुंसाम् ईश-कथाः प्रोक्ता नानाख्यानोपबृंहिताः
02100061 निरोधोऽस्यानुशयनम् आत्मनः सह शक्तिभिः
02100062 मुक्तिर्हित्वान्यथा रूपं स्व-रूपेण व्यवस्थितिः
02100071 आभासश्च निरोधश्च यतोऽस्त्यध्यवसीयते
02100072 स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते
02100081 योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः
02100082 यस्तत्रोभय-विच्छेदः पुरुषो ह्याधिभौतिकः
02100091 एकम् एकतराभावे यदा नोपलभामहे
02100092 त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः
02100101 पुरुषोऽण्डं विनिर्भिद्य यदासौ स विनिर्गतः
02100102 आत्मनोऽयनम् अन्विच्छन्न् अपोऽस्राक्षीच् छुचिः शुचीः
02100111 तास्ववात्सीत् स्व-सृष्टासु सहस्रं परिवत्सरान्
02100112 तेन नारायणो नाम यदापः पुरुषोद्भवाः
02100121 द्रव्यं कर्म च कालश्च स्वभावो जीव एव च
02100122 यद्-अनुग्रहतः सन्ति न सन्ति यद्-उपेक्षया
02100131 एको नानात्वम् अन्विच्छन् योग-तल्पात् समुत्थितः
02100132 वीर्यं हिरण्मयं देवो मायया व्यसृजत् त्रिधा
02100141 अधिदैवम् अथाध्यात्मम् अधिभूतम् इति प्रभुः

02100142 अथैकं पौरुषं वीर्यं त्रिधाभिद्यत तच् छृणु
02100151 अन्तः शरीर आकाशात् पुरुषस्य विचेष्टतः
02100152 ओजः सहो बलं जज्ञे ततः प्राणो महान् असुः
02100161 अनुप्राणन्ति यं प्राणाः प्राणन्तं सर्व-जन्तुषु
02100162 अपानन्तम् अपानन्ति नर-देवम् इवानुगाः
02100171 प्राणेनाक्षिपता क्षुत् तृडन्तरा जायते विभोः
02100172 पिपासतो जक्षतश्च प्राङ् मुखं निरभिद्यत
02100181 मुखतस्तालु निर्भिन्नंजिह्वा तत्रोपजायते
02100182 ततो नाना-रसो जज्ञे जिह्वया योऽधिगम्यते
02100191 विवक्षोर्मुखतो भूम्नो वह्निर्वाग् व्याहृतं तयोः
02100192 जले चैतस्य सुचिरं निरोधः समजायत
02100201 नासिके निरभिद्येतां दोधूयति नभस्वति
02100202 तत्र वायुर्गन्ध-वहो घ्राणो नसि जिघृक्षतः
02100211 यदात्मनि निरालोकम् आत्मानं च दिदृक्षतः
02100212 निर्भिन्ने ह्यक्षिणी तस्य ज्योतिश्चक्षुर्गुण-ग्रहः
02100221 बोध्यमानस्य ऋषिभिरात्मनस्तज् जिघृक्षतः
02100222 कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुण-ग्रहः
02100231 वस्तुनो मृदु-काठिन्य- लघु-गुर्व्-ओष्ण-शीतताम्
02100232 जिघृक्षतस्त्वङ् निर्भिन्ना तस्यां रोम-मही-रुहाः
02100233 तत्र चान्तर्बहिर्वातस्त्वचा लब्ध-गुणो वृतः
02100241 हस्तौ रुरुहतुस्तस्य नाना-कर्म-चिकीर्षया
02100242 तयोस्तु बलवान् इन्द्र आदानम् उभयाश्रयम्
02100251 गतिं जिगीषतः पादौ रुरुहातेऽभिकामिकाम्
02100252 पद्भ्यां यज्ञः स्वयं हव्यं कर्मभिः क्रियते नृभिः
02100261 निरभिद्यत शिश्नो वै प्रजानन्दामृतार्थिनः
02100262 उपस्थ आसीत् कामानां प्रियं तद्-उभयाश्रयम्
02100271 उत्सिसृक्षोर्धातु-मलं निरभिद्यत वै गुदम्
02100272 ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः
02100281 आसिसृप्सोः पुरः पुर्या नाभि-द्वारम् अपानतः
02100282 तत्रापानस्ततो मृत्युः पृथक्त्वम् उभयाश्रयम्
02100291 आदित्सोरन्न-पानानाम् आसन् कुक्ष्य्-अन्त्र-नाडयः
02100292 नद्यः समुद्राश्च तयोस्तुष्टिः पुष्टिस्तद्-आश्रये
02100301 निदिध्यासोरात्म-मायां हृदयं निरभिद्यत
02100302 ततो मनश्चन्द्र इति सङ्कल्पः काम एव च
02100311 त्वक्-चर्म-मांस-रुधिर- मेदो-मज्जास्थि-धातवः
02100312 भूम्य्-अप्-तेजोमयाः सप्त प्राणो व्योमाम्बु-वायुभिः
02100321 गुणात्मकानीन्द्रियाणि भूतादि-प्रभवा गुणाः
02100322 मनः सर्व-विकारात्मा बुद्धिर्विज्ञान-रूपिणी
02100331 एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया
02100332 मह्य्-आदिभिश्चावरणैरष्टभिर्बहिरावृतम्

02100341 अतः परं सूक्ष्मतमम् अव्यक्तं निर्विशेषणम्
02100342 अनादि-मध्य-निधनं नित्यं वाङ्-मनसः परम्
02100351 अमुनी भगवद्-रूपे मया ते ह्यनुवर्णिते
02100352 उभे अपि न गृह्णन्ति माया-सृष्टे विपश्चितः
02100361 स वाच्य-वाचकतया भगवान् ब्रह्म-रूप-धृक्
02100362 नाम-रूप-क्रिया धत्ते सकर्माकर्मकः परः
02100371 प्रजा-पतीन् मनून् देवान् ऋषीन् पितृ-गणान् पृथक्
02100372 सिद्ध-चारण-गन्धर्वान् विद्याध्रासुर-गुह्यकान्
02100381 किन्नराप्सरसो नागान् सर्पान् किम्पुरुषान् नरान्
02100382 मात्- रक्षः-पिशाचांश्च प्रेत-भूत-विनायकान्
02100391 कूष्माण्डोन्माद-वेतालान् यातुधानान् ग्रहान् अपि
02100392 खगान् मृगान् पशून् वृक्षान् गिरीन् नृप सरीसृपान्
02100401 द्वि-विधाश्चतुर्-विधा येऽन्ये जल-स्थल-नभौकसः
02100402 कुशलाकुशला मिश्राः कर्मणां गतयस्त्विमाः
02100411 सत्त्वं रजस्तम इति तिस्रः सुर-नृ-नारकाः
02100412 तत्राप्येकैकशो राजन् भिद्यन्ते गतयस्त्रिधा
02100413 यदैकैकतरोऽन्याभ्यां स्व-भाव उपहन्यते
02100421 स एवेदं जगद्-धाता भगवान् धर्म-रूप-धृक्
02100422 पुष्णाति स्थापयन् विश्वं तिर्यङ्-नर-सुरादिभिः
02100431 ततः कालाग्नि-रुद्रात्मा यत् सृष्टम् इदम् आत्मनः
02100432 सन्नियच्छति तत् काले घनानीकम् इवानिलः
02100441 इत्थम्-भावेन कथितो भगवान् भगवत्तमः
02100442 नेत्थम्-भावेन हि परं द्रष्टुम् अर्हन्ति सूरयः
02100451 नास्य कर्मणि जन्मादौ परस्यानुविधीयते
02100452 कर्तृत्व-प्रतिषेधार्थं माययारोपितं हि तत्
02100461 अयं तु ब्रह्मणः कल्पः सविकल्प उदाहृतः
02100462 विधिः साधारणो यत्र सर्गाः प्राकृत-वैकृताः
02100472 परिमाणं च कालस्य कल्प-लक्षण-विग्रहम्
02100472 यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पम् अथो शृणु
0210048 शौनक उवाच
02100481 यदाह नो भवान् सूत क्षत्ता भागवतोत्तमः
02100482 चचार तीर्थानि भुवस्त्यक्त्वा बन्धून् सुदुस्त्यजान्
02100491 क्षत्तुः कौशारवेस्तस्य संवादोऽध्यात्म-संश्रितः
02100492 यद्वा स भगवांस्तस्मै पृष्टस्तत्त्वम् उवाच ह
02100501 ब्रूहि नस्तदिदं सौम्य विदुरस्य विचेष्टितम्
02100502 बन्धु-त्याग-निमित्तं च यथैवागतवान् पुनः
0210051 सूत उवाच
02100511 राज्ञा परीक्षिता पृष्टो यदवोचन् महा-मुनिः
02100512 तद्वोऽभिधास्ये शृणुत राज्ञः प्रश्नानुसारतः